BHAGALPUR, MAGADH, RANCHI, MITHILA
BIHAR & PATNA UNIVERSITY



*FOR*

B. A. Part I Pass, Subsidiary & Honours Students

# MEGHDUTAM

# मेघदूतम् (पूर्व मेघ)

DR. KIRTYANAND 'PRACHETA' SHASHTRI
Professor, Sanskrit Department
G. D. College, Begusarai

ALKA PRAKASHAN

# महाकवि कालिदास विरचितं

# मेघदूतम्

## (पूर्वमेघः)


प्रणेता :

**डॉ० कृत्यानन्द 'प्रचेता' शास्त्री**

एम० ए०, पी-एच० डी०, डी० लिट्०

साहित्य-व्याकरणाचार्य (यू० पी०, बिहार)

साहित्यालङ्कार, विद्यारत्न (द्वय)

प्राध्यापक, संस्कृत विभाग

स्नातकोत्तर केन्द्र :

जी० डी० कॉलेज, बेगूसराय





**अलका प्रकाशन**

H.O. खजान्ची रोड-पटना

B.O. [illegible]

# विषय-सूची

गुरुवर

डॉ० शिवशंकर प्रसाद

एम० ए०, पी-एच० डी०, डी० लिट्०

प्रोफेसर, स्नातकोत्तर संस्कृत विभाग

बिहार विश्वविद्यालय, मुजफ्फरपुर

के

कर-कमलों में

सादर समर्पित !

'प्रचेता'

महाकविकालिदासविरचितं

# मेघदूतम्

## (पूर्वमेघः)

कश्चित्कान्ताविरहगुरुणा स्वाधिकारात्प्रमत्तः
शापेनास्तङ्गमितमहिमा वर्षभोग्येण भर्तुः।
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥१॥

**अन्वय—**

स्वाधिकारात् प्रमत्तः कान्ताविरहगुरुणा वर्षभोग्येण भर्तुः शापेन अस्तङ्गमितमहिमा कश्चित् यक्षः जनकतनयास्नानपुण्योदकेषु स्निग्धच्छायातरुषु रामगिर्याश्रमेषु वसतिं चक्रे।

**शब्दार्थ—**

स्वाधिकारात् प्रमत्तः = अपने कार्य से प्रमाद करने वाले, कान्ताविरहगुरुणा = (अतएव) प्रिया के विरह से दुःसह, वर्षभोग्येण = (एवं) वर्ष तक भोगे जाने योग्य, भर्तुः = स्वामी के, शापेन = शाप द्वारा, अस्तङ्गमितमहिमा = नष्ट हुई महिमा वाले, कश्चित् यक्षः = किसी यक्ष ने, जनकतनयास्नानपुण्योदकेषु = जनक-पुत्री सीता के स्नानों से पवित्र हुए जल वाले, स्निग्धच्छायातरुषु = (तथा) घने छायादार वृक्षों से युक्त, रामगिर्याश्रमेषु = रामगिरि के आश्रमों में, वसतिं चक्रे = निवास किया।

**भाषानुवाद—**

अपने कार्य से प्रमाद करने वाले (अतएव) प्रिया के विरह से दुःसह एवं वर्ष तक भोगे जाने योग्य स्वामी के शाप द्वारा नष्ट हुई महिमा वाले किसी यक्ष ने जनक-पुत्री सीता के स्नानों से पवित्र हुए जलवाले तथा घने छायादार वृक्षों से युक्त रामगिरि के आश्रमों में निवास किया।

**संस्कृत-व्याख्या—**

पद्यमिदं मेघदूतस्य पूर्वमेघात् समुद्धृतोऽस्ति। अस्य रचयिता कविकुलगुरुः कालिदासः अस्ति। असौ कनिष्ठिकाधिष्ठित... [illegible]

पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाऽधिष्ठितकालिदासा ।
अद्याऽपि तत्तुल्यकवेरभावादनामिका साऽर्थवती बभूव ॥

संस्कृतसाहित्ये महाकविकालिदासस्य स्थानं महत्त्वपूर्णं वर्तते । असौ उपमायाः सम्राट् आसीत् । 'उपमा कालिदासस्य' उक्तिरियं संस्कृत-साहित्ये अतीव प्रसिद्धा वर्तते । तस्य उपमाः अत्यन्ताः सरसाः एवं मनोहराः वर्तन्ते ।

अन्येषां कवीनामिव पाण्डित्य-प्रदर्शनस्य प्रवृत्तिः तस्मिन् न दृश्यते । कालिदासः वैदर्भीरीतेः विशिष्टः कविरस्ति—"वैदर्भीरीतिसंदर्भे कालिदासो विशिष्यते ।"

अस्य भाषा सरला सरसा च वर्तते । सहैव क्लिष्टसमासैः तथा कृत्रिमतया रहिता वर्तते ।

किमधिकम् ? महाकविः कालिदासः संस्कृत—साहित्यस्य अमरः कलाकारो विद्यते । केवलं भारतीयसाहित्ये एव न, अपितु विश्वसाहित्ये तस्य अद्वितीयं स्थानं वर्तते, नास्ति विषयेऽस्मिन् कोऽपि संदेहः ।

महाकविकालिदासः स्वकर्तव्यच्युतस्य कस्यचित् यक्षस्य वर्णनं कृतवान् पद्येऽस्मिन् स्वाधिकारात् = स्वकीयनियोगात्, प्रमत्तः = अनवहितः, (अतएव) कान्ताविरहगुरुणा = प्रियावियोगदुस्तरेण, वर्षभोग्येण = संवत्सरभोग योग्येन, भर्तुः = स्वामिनः, कुबेरस्य इत्यर्थः । शापेन = निग्रहवचसा, अस्तङ्गमितामहिमा = प्रतिहतमहत्त्वः, कश्चित् = कोऽपि, यक्षः = गुह्यकः, जनकतनयास्नान-पुण्योदकेषु = सीतामज्जनपावनजलेषु, स्निग्धच्छायातरुषु = सान्द्रनमेरुवृक्षेषु, रामगिर्याश्रमेषु = चित्रकूटाश्रमेषु, वसतिम् = निवासम्, चक्रे = कृतवान् ।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् स्वकर्तव्य-भ्रष्टः कोऽपि यक्षः प्रियाविरहदुःसहेन स्वामिनः कुबेरस्य शापेन विनाशितमहिमा सन् सीता-स्नानपवित्रजलेषु सान्द्रच्छायातरुषु रामगिर्याश्रमेषु निवासं कृतवान् ।

पद्येऽस्मिन् काव्यलिङ्गमलङ्कारो विद्यते ।

**टिप्पणी :**

मेघदूतम्-मेघः दूतः यस्मिन् तत् काव्यम् मेघदूतम् अर्थात् मेघ है दूत जिसमें वह काव्य मेघदूत । अथवा मेघ एव दूतः यस्मिन् काव्ये तत् मेघदूतम् अर्थात् मेघ ही है दूत जिस काव्य में वह मेघदूत । मेघदूतम्—दूत = दु + क्त (त) इसमें 'दुतनिभ्यां दीर्घश्च' इस उणादि सूत्र से 'दु' के उ को दीर्घ होकर 'दूत' शब्द निष्पन्न हुआ है । मेघः दूतः यस्मिन् तत् मेघदूतम्, इस तरह बहुव्रीहि समास से जिसमें मेघ दूत हुआ है वह काव्य मेघदूत कहा जाता है, ऐसी व्युत्पत्ति से यह शब्द नपुंसक लिङ्गी बन जाता है ।

मेघदूत एक खण्ड काव्य है। खण्ड काव्य का लक्षण है—"खण्डकाव्यं भवेत्काव्यस्यैकदेशानुसारि च" अर्थात् काव्य के एक अंश का अनुसरण करने वाला खण्डकाव्य होता है।

संस्कृत में ग्रन्थारम्भ करने के लिए तीन प्रकार के मङ्गल होते हैं—

"आशीर्नमस्क्रिया वस्तुनिर्देशो वाऽपि तन्मुखम्" अर्थात् (१) आशीः (२) नमस्क्रिया और (३) वस्तुनिर्देश।

इस काव्य का प्रारम्भ महाकवि कालिदास ने 'वस्तुनिर्देश' से किया है।

शृंगार रस के दो भेद हैं—संयोग और विप्रलम्भ। मेघदूत में विप्रलम्भ शृंगार है। विप्रलम्भ शृङ्गार के भी चार भेद होते हैं—(१) पूर्वराग (२) मान (३) प्रवास और (४) करुण। इसमें प्रवासरूप विप्रलम्भ है। इस काव्य में कुबेर के शाप से यक्ष को प्रवास हुआ है। अपने स्वामी कुबेर से निर्दिष्ट कार्य में प्रमाद करने से यक्ष को साल भर अपनी प्रिया से वियोग होने का शाप मिला है।

संभवतः कुबेर ने किसी तालाब की रक्षा करने के लिए यक्ष को नियुक्त किया था, उस कार्य में प्रमाद करने से उसे शाप मिला।

इस काव्य के सारे पद्य 'मन्दाक्रान्ता' छन्द से आवृत हैं।

'मन्दाक्रान्ता' छन्द का लक्षण है—

"मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद् गुरु चेत्"।

यदि मगण, भगण, नगण दो तगण, और अन्त में दो गुरु हों तो उसे 'मन्दाक्रान्ता' छन्द कहते हैं। इसमें चार, छः और सात वर्णों पर यति (विश्राम) होती है।

| मगण | भगण | नगण | तगण | तगण | गु. | गु. |
|---|---|---|---|---|---|---|
| SSS | SII | III | SSI | SSI | S | S |

कश्चित्कान्ताविरहगुरुणा स्वाधिकारात्प्रमत्तः
S SS S II, III, S S I, S S I, SS

शापेनास्तङ्गमितमहिमा वर्षभोग्येण भर्तुः।
S S S, S I I, I I I, S SI, S S I, S S

यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
S S S, S I I, I I I, S S I, S S I, S S

स्निग्धच्छायातरुषु वसति रामगिर्याश्रमेषु ॥
S S S, S । ।, । । ।, S S ।, S S ।, S S

स्वाधिकारात्प्रमत्तः—अपने कार्य में प्रमाद करने से।

स्वाधिकारात्— अधिक्रियते अस्मिन् इति अधिकारः। यहाँ 'हलश्च' सूत्र से अधिकरण में घञ् प्रत्यय हुआ। अधि + कृ + घञ् = अधिकारः। स्वस्य अधिकारः स्वाधिकारः, तस्मात् (षष्ठीतत्पुरुषसमासः)

प्रमत्तः—यहाँ 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' इस वार्तिक से अपादान संज्ञा होकर 'अपादाने पञ्चमी' सूत्र से पञ्चमी विभक्ति हुई है।

प्रमत्तः—प्र + मद् + क्त(त)।

वर्षभोग्येण– साल भर भोग जाने वाले। वर्षं भोग्यः, तेन। यह शब्द शापेन का विशेषण है।

अस्तङ्गमितमहिमा—नष्ट कर दी गयी है महिमा जिसकी ऐसा (यक्ष)। महिमा का अर्थ है—अलौकिक शक्ति। महिमा आठ सिद्धियों में से एक है।

अणिमा महिमा चैव गरिमा लघिमा तथा।
प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टसिद्धयः॥

अर्थात् अणिमा, महिमा, गरिमा, लघिमा, प्राप्ति, प्राकाम्य, ईशित्व और वशित्व—ये आठ सिद्धियाँ हैं।

अस्तङ्गमितमहिमा—अस्तं गमितो महिमा यस्य (बहुव्रीहि समास)।

स्निग्धच्छायातरुषु—छायादार घने वृक्ष हैं जिनमें छाया-प्रधानाः तरवः छायातरवः मध्यमपदलोपी समास)। स्निग्धाः छायातरवः येषु तेषु (बहुव्रीहिसमासः)।

स्निग्धाः—स्निह् + क्त (त)।

जनकतनयास्नानपुण्योदकेषु—जनक-पुत्री (सीता) के स्नानों से पवित्र हो गये हैं जल जिनमें। जनकस्य तनयायाः (षष्ठीतत्पुरुषसमास) स्नानैः पुण्यानि (तृतीयातत्पुरुषसमास) उदकानि येषु तेषु (बहुव्रीहिसमास)।

रामगिर्याश्रमेषु—रामगिरि के आश्रमों में। रामगिरेः आश्रमेषु (षष्ठीतत्पुरुषसमास)। चक्रे—किया। कृ + लिट् (प्रथम पुरुष एकवचन)।

तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी
नीत्वा मासान्कनकवलयभ्रंशरिक्तप्रकोष्ठः।
आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुं
वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श ॥२॥

**अन्वय :**

अबलाविप्रयुक्तः कनकवलयभ्रंशरिक्त प्रकोष्ठः स कामी तस्मिन् अद्रौ कतिचित् मासान् नीत्वा आषाढस्य प्रथमदिवसे आश्लिष्टसानुं वप्रक्रीडा-परिणतगजप्रेक्षणीयं मेघं ददर्श ।

**शब्दार्थ :**

अबलाविप्रयुक्तः = प्रिया से बिछुड़े हुए, कनकवलयभ्रंश = (एवं दुर्बलता के कारण) सुवर्ण कङ्कण के गिर जाने से, रिक्तप्रकोष्ठः = शून्य कलाई वाले, सः कामी = उस कामुक यक्ष ने, तस्मिन् अद्रौ = उस (चित्रकूट) पर्वत पर, कतिचित् मासान् = कुछ महीने बिताकर, आषाढस्य प्रथमदिवसे = आषाढ़ के प्रथम दिन आश्लिष्टसानुम् = पर्वत के शिखर से सटे हुए, वप्रक्रीडापरिणत = (एवं) तिरछे दाँतों से प्रहार करते हुए मिट्टी उखाड़ने की क्रीडा करने वाले, गजप्रेक्षणीयम् = हाथी की तरह दीख पड़ने वाले, मेघं ददर्श = मेघ को देखा ।

**भाषानुवाद :**

प्रिया से बिछुड़े हुए एवं दुर्बलता के कारण सुवर्ण कङ्कण के गिर जाने से शून्य कलाई वाले उस कामुक यक्ष ने उस (चित्रकूट) पर्वत पर कुछ महीने बिताकर आषाढ़ के प्रथम दिन पर्वत के शिखर से सटे हुए एवं तिरछे दाँतों से प्रहार करते हुए मिट्टी उखाड़ने की क्रीड़ा करने वाले हाथी की तरह दीख पड़ने वाले मेघ को देखा ।

**संस्कृत व्याख्या :**

पद्येऽस्मिन् विरहिणः यक्षस्य मेघदर्शनं वर्णितम् अस्ति । अबलाविप्रयुक्तः = कान्तावियोगी, कनकवलयभ्रंशरिक्तप्रकोष्ठः = सुवर्णकटकपातशून्यमणिबन्धः, सः = असौ, कामी = कामुकः, तस्मिन् = अमुष्मिन्, अद्रौ = पर्वते, चित्रकूटाद्रौ इत्यर्थः । कतिचित् = कियतः, मासान् = त्रिंशद्दिनसमूहम् अष्टौ मासान् इत्यर्थः । नीत्वा = यापयित्वा, आषाढस्य = शुचेः, प्रथमदिवसे = आद्यदिने, आश्लिष्ट-सानुम् = आक्रान्तकूटम्, वप्रक्रीडापरिणतगजप्रेक्षणीयम् = उत्खातकेलितिर्यग्दन्त-प्रहारहस्तिदर्शनीयम्, मेघम् = जीमूतम्, ददर्श = दृष्टवान् ।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् प्रियायाः वियोगव्यथया अत्यन्तः कृशः असौ कामुकः यक्षः तस्मिन् चित्रकूटाद्रौ अष्टौ मासान् यापयित्वा आषाढस्य प्रथमदिने पर्वतस्य शिखरे आक्रान्तकूटम् उत्खातकेलिषु तिर्यग्दन्त-प्रहारगजमिव मेघं दृष्टवान् ।

पद्येऽस्मिन् लुप्तोपमाऽलङ्कारः अस्ति ।

**टिप्पणी :**

अबलाविप्रयुक्तः—प्रिया से बिछुड़ा हुआ। अबलया विप्रयुक्तः (तृतीया तत्पुरुषसमास)। कामी—कामुक। कम्+घञ् भावे कामः सः अस्ति अस्य इति काम+इनि (मत्वर्थ)। कनकवलयभ्रंशरिक्तप्रकोष्ठः—सुवर्ण-कङ्कण के गिर जाने से शून्य कलाई वाला। कनकस्य वलयः (षष्ठी तत्पुरुषसमास) तस्य भ्रंशः (षष्ठी तत्पुरुषसमास) तेन रिक्तः प्रकोष्ठः यस्य (बहुव्रीहिसमास)। प्रेक्षणीयम्—दिखाई देने वाले (को)। प्र+ईक्ष्+अनीयर् (अनीय)। ददर्श—देखा। दृश् +लिट् (प्रथमपुरुष एकवचन)।

तस्य स्थित्वा कथमपि पुरः कौतुकाधानहेतो—
रन्तर्बाष्पश्चिरमनुचरो राजराजस्य दध्यौ।
मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः
कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे ॥३॥

**अन्वय :**

राजराजस्य अनुचरः अन्तर्बाष्पः (सन्), कौतुकाधानहेतोः तस्य कथमपि स्थित्वा चिरं दध्यौ। मेघालोके (सति) सुखिनः अपि चेतः अन्यथावृत्ति भवति, कण्ठाश्लेषप्रणयिनि जने दूरसंस्थे (सति) किं पुनः?

**शब्दार्थ :**

राजराजस्य=कुबेर का, अनुचरः=सेवक(यक्ष), अन्तर्बाष्पः=भीतर ही भीतर आँसू को रोककर, कौतुकाधानहेतोः=उत्सुकता उत्पन्न कर देने वाले, तस्य=उस मेघ के, पुरः=सामने, कथमपि=किसी तरह, स्थित्वा=स्थित होकर, चिरं दध्यौ=देर तक सोचता रहा। मेघालोके=मेघ के दर्शन होने पर, सुखिनः अपि चेतः=सुखीजन का भी चित्त, अन्यथावृत्ति भवति=विकृत हो जाता है, कण्ठा-श्लेषप्रणयिनि जने=फिर गले मिलने की इच्छा रखने वाली प्रिया के, दूरसंस्थे=दूर रहने पर, किं पुनः=तो कहना ही क्या?

**भावानुवाद :**

कुबेर का सेवक (यक्ष) भीतर ही भीतर आँसू को रोक कर उत्सुकता उत्पन्न कर देने वाले उस मेघ के सामने किसी तरह स्थित होकर देर तक सोचता रहा। मेघ के दर्शन होने पर सुखीजन का भी चित्त विकृत हो जाता है, फिर गले मिलने की इच्छा रखने वाली प्रिया के दूर रहने पर कहना ही क्या?

**संस्कृत-व्याख्या :**

'मेघं दृष्ट्वा यक्षः चिन्तनशीलो जातः' इत्यस्य वर्णनं कुर्वन् महाकविकालिदासः कथयति पद्येऽस्मिन्-राजराजस्य = कुवेरस्य, अनुचरः = भृत्यः, अन्तर्वाष्पः = अवरुद्धाऽश्रुः (सन्), कौतुकाधानहेतोः = अभिलाषोत्पत्तिकारणस्य, तस्य = अमुष्य, मेघस्य इत्यर्थः। कथमपि = केनापि प्रकारेण, स्थित्वा = स्थितिं विधाय, चिरम् = बहुकालपर्यन्तम्, दध्यौ = चिन्तयामास, मेघालोके = मेघदर्शने, सुखिनः अपि = सुखयुक्तस्य अपि, चेतः = चित्तम्, अन्यथावृत्ति = अन्यप्रकारम्, भवति = वर्तते, कण्ठाश्लेषप्रणयिनि = कण्ठालिङ्गनार्थिनि, जने = लोके प्रियारूपेजने इत्यर्थः। दूरसंस्थे = विप्रकृष्टवृत्तौ, किं पुनः = किं वक्तव्यम् ? कवेः कथनस्य तात्पर्यम् इदमस्ति यत् कुवेरस्य सेवकः यक्षः मेघम् अवलोक्य प्रियायाः च स्मरणं कृत्वा अत्यन्तः उत्कण्ठितो जातः। सः उत्कण्ठितोत्पादकस्य मेघस्य पुरतः केनापि प्रकारेण स्थित्वा चिरं चिन्तयामास। मेघालोके प्रियासहितस्यापि जनस्य चित्तं विकृतं भवति, तदा कण्ठालिङ्गनार्थिनि जने दूरसंस्थे किं कथनीयम् ?

पद्येऽस्मिन् अर्थान्तरन्यासोऽलङ्कारो विद्यते।

**टिप्पणी :**

राजराजस्य—कुवेर का। राज्ञां राजा राजराजः, तस्य (षष्ठीतत्पुरुष-समास)। यहाँ 'राजाहःसखिभ्यष्टच्' सूत्र से टच् प्रत्यय' हुआ।

अन्तर्बाष्प :—(नेत्रों के) भीतर ही रुके हुए हैं आँसू जिसके। अन्तर्गतो बाष्पः यस्य सः (बहुव्रीहिसमास)।

दध्यौ—सोचता रहा। ध्यै + लिट् (प्रथम पुरुष एकवचन)।

अन्यथावृत्ति-और ही वृत्ति वाला यानी विकृत। अन्यथा वृत्तिः यस्य तत् (बहुव्रीहिसमास)। कण्ठाश्लेषप्रणयिनि = गले मिलने की इच्छा वाले। कण्ठस्य आश्लेषः तस्य प्रणयी तस्मिन् (षष्ठी तत्पुरुषसमास) दूरसंस्थे—दूर स्थित रहने पर। दूरे संस्था यस्य, तस्मिन् (बहुव्रीहिसमास)।

**प्रत्यासन्ने नभसि दयिताजीवितालम्बनार्थी**
**जीमूतेन स्वकुशलमयीं हारयिष्यन्प्रवृत्तिम्।**
**स प्रत्यग्रैः कुटजकुसुमैः कल्पितार्घाय तस्मै**
**प्रीतः प्रीतिप्रमुखवचनं स्वागतं व्याजहार ॥४॥**

**अन्वय :**

नभसि प्रत्यासन्ने दयिताजीवितालम्बनार्थी सः स्वकुशलमयीं प्रवृत्तिं हारयिष्यन् प्रत्यग्रैः कुटजकुसुमैः कल्पितार्घाय तस्मै प्रीतः (सन्) प्रीतिप्रमुखवचनं स्वागतं व्याजहार ।

**शब्दार्थ :**

नभसि प्रत्यासन्ने = श्रावण मास के निकट होने पर, दयिताजीवितालम्बनार्थी = प्रिया के प्राणों को सहारा देना चाहते हुए, सः = उस (यक्ष) ने, जीमूतेन = मेघ के द्वारा, स्वकुशलमयीं प्रवृत्तिम् = अपने कुशल-समाचार को, हारयिष्यन् = भेजने की इच्छा से, प्रत्यग्रैः कुटजकुसुमैः = ताजे चमेली के फूलों से, कल्पितार्घाय = पूजा की सामग्री तैयार कर, तस्मै = उस मेघ को, प्रीतः = प्रसन्न हो, प्रीति-प्रमुखवचनम् = प्रेमपूर्वक शब्दों में, स्वागतं व्याजहार = 'स्वागतम्' कहा ।

**भावानुवाद :**

श्रावणमास के निकट होने पर प्रिया के प्राणों को सहारा देना चाहते हुए उस यक्ष ने मेघ के द्वारा अपने कुशल-समाचार को भेजने की इच्छा से ताजे चमेली के फूलों से पूजा की सामग्री तैयार कर उस मेघ को प्रसन्न हो, प्रेमपूर्वक शब्दों में 'स्वागतम्' कहा ।

**संस्कृत-व्याख्या :**

'यक्षः मेघं दृष्ट्वा तस्मै गिरिमल्लिकापुष्पाणाम् अर्घ्यं दत्वा स्नेहपूर्वकं तस्य स्वागतं कृतवान्' इत्यस्य वर्णनं कृतवान् कविकालिदासः पद्येऽस्मिन्—

नभसि = श्रावणे, प्रत्यासन्ने = निकटवर्तिनि, दयिताजीवितालम्बनार्थी = प्रियाजीवनधारणेच्छुकः, सः = असौ, यक्षः इत्यर्थः । स्वकुशलमयीम् = स्वक्षेमप्रधानाम्, प्रवृत्तिम् = वार्ताम्, हारयिष्यन् = प्रापयिष्यन्, प्रत्यग्रैः = नवीनैः, कुटजकुसुमैः = गिरिमल्लिकापुष्पैः, कल्पितार्घाय = अनुष्ठितपूजाविधये, तस्मै = अमुष्मै, मेघाय इत्यर्थः । प्रीतः (सन्) = प्रसन्नः (सन्), प्रीतिप्रमुखवचनम् = प्रणयप्रधानभाषितम्, स्वागतम् = स्वागतवचनम्, व्याजहार = उक्तवान् ।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् श्रावणमासि प्रत्यासन्ने सति प्रियायाः प्राणरक्षणाय असौ यक्षः तां प्रति मेघेन स्वकुशलवार्तां प्रापयितुम् इच्छां विहितवान् । अतः सः मेघम् अवलोक्य तस्मै गिरिमल्लिका पुष्पाणाम् अर्घ्यं दत्वा सस्नेहं तस्य स्वागतं कृतवान् ।

**टिप्पणी :**

नभसि = सावन के । नभस् + सप्तमी विभक्ति एकवचन । यहाँ 'यस्य च भावेन भावलक्षणम्' सूत्र से सप्तमी विभक्ति हुई है ।

दयिता जीवितालम्बनार्थी—प्रिया के जीवन का सहारा चाहने वाला । दयितायाः जीवितं (षष्ठी तत्पुरुषसमास) तस्य आलम्बनम् (षष्ठी तत्पुरुषसमास) ।

हारयिष्यन्—भेजना चाहता हुआ । हृ + णिच् भविष्यदर्थ में शतृ प्रत्यय प्रथमा विभक्ति एकवचन, प्रीतिप्रमुखवचनम्—प्रेम भरे शब्द कह कर । प्रीतिप्रमुखानि वचनानि यस्मिन् कर्मणि यथा तथा (बहुव्रीहिसमास) । व्याजहार—कहा । वि + आ + हृ + लिट् (प्रथम पुरुष एकवचन) ।

धूमज्योतिः सलिलमरुतां सन्निपातः क्व मेघः
संदेशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः ।
इत्यौत्सुक्यादपरिगणयन्गुह्यकस्तं ययाचे
कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ॥५॥

**अन्वय :**

क्व धूमज्योतिः सलिलमरुतां सन्निपातः मेघः ? क्व (च) पटुकरणैः प्राणिभिः प्रापणीयाः सन्देशार्थाः ? इति औत्सुक्यात् अपरिगणयन् गुह्यकः तं ययाचे । हि कामार्ताः—चेतनाचेतनेषु प्रकृतिकृपणाः ।

**शब्दार्थ :**

क्व = कहाँ तो, धूमज्योति : = धुआँ, प्रकाश, सलिलमरुताम् = जल तथा वायु का, सन्निपातः मेघः = सम्मिश्रण रूप मेघ, क्व (च) कहाँ, पटुकरणैः प्राणिभिः = समर्थ इन्द्रियों वाले प्राणियों द्वारा, प्रापणीयाः सन्देशार्थाः = भेजे जाने योग्य संदेश के वचन, इति औत्सुक्यात् = उत्सुकतावश इस बात को, अपरिगणयन् = न विचारते हुए, गुह्यकः = यक्ष ने, तं ययाचे = उस मेघ से याचना की, हि = क्योंकि, कामार्ताः = काम से पीड़ित (जन), चेतनाचेतनेषु = जड़ और चेतन पदार्थों के प्रति, प्रकृतिकृपणाः = स्वभाव से ही दीन हो जाते हैं यानी विवेकशून्य हो जाते हैं ।

**भाषानुवाद :**

कहाँ तो धुआँ, प्रकाश, जल तथा वायु का सम्मिश्रण रूप मेघ तथा कहाँ समर्थ इन्द्रियों वाले प्राणियों द्वारा भेजे जाने योग्य संदेश के वचन ? उत्सुकतावश इस बात को न विचारते हुए यक्ष ने उस मेघ से याचना की,

क्योंकि काम से पीड़ित जन, जड़ और चेतन पदार्थों के प्रति स्वभाव से ही दीन हो जाते हैं यानी विवेकशून्य हो जाते हैं

**संस्कृत-व्याख्या :**

'मेघेन संदेशप्रेषणम् उचितं भविष्यति अनुचितं वा' इति विचारयन् यक्षः कथयति पद्येऽस्मिन्—क्व = कुत्र ? धूमज्योतिः सलिलमरुताम् = धूमतेजोजलपवनानाम्, सन्निपातः = समूहः, मेघः = जीमूतः, क्व = कुत्र ? पटुकरणैः = समर्थेन्द्रियैः, प्राणिभिः = चेतनैः, प्रापणीयाः = प्रापयितव्याः, सन्देशार्थाः = सन्देशवार्ताः, इति = एवम्, औत्सुक्यात् = कामौत्सुक्यात्, अपरिगणयन् = न परिगणयन् अविचारयन् इत्यर्थः। गुह्यकः = यक्षः, तम् = मेघम्, ययाचे = याचितवान्, हि = यतः, कामार्ताः = मदनातुराः, चेतनाचेतनेषु = जीवाजीवेषु, प्रकृतिकृपणाः = स्वभावदीनाः।

कवेः कथनस्य तात्पर्यम् इदम् अस्ति यत् क्व धूमतेजोजलपवनानां समूहरूपः अचेतनः मेघः ? क्व च समर्थेन्द्रिययुक्तैः पुरुषैः प्रेषणीयानि सन्देशवचनानि ? अनयोः द्वयोः मध्ये महद् अन्तरं वर्तते, तथापि कामवेगेन सर्वमिदं न विचारयन् यक्षः मेघं याचितवान्, यतो हि मन्मथाकुलाः जनाः चेतनाचेतनयोः विवेकशून्याः भवन्ति। अत्र सङ्करालंकारो विद्यते।

**टिप्पणी :**

धूमज्योतिः सलिलमरुतां सन्निपातः—धुआँ, तेज, वायु तथा जल का सम्मिश्रण। धूमः च ज्योतिः च सलिलं च मरुत् च (द्वन्द्वसमास) तेषां सन्निपातः।

पटुकरणैः—समर्थ इन्द्रियों वाले (के द्वारा)।

पटूनि करणानि येषाम्, तैः (बहुव्रीहिसमास) यहाँ 'करणाऽधिकरणयोश्च' सूत्र से करण अर्थ में ल्युट् (अन, प्रत्यय हुआ है।

कामार्ताः—काम से पीड़ित। कामेन आर्ताः (तृतीया तत्पुरुष समास)।

प्रकृतिकृपणाः—स्वभाव से दीन। प्रकृत्या कृपणाः (तृतीया तत्पुरुष समास)। यहाँ 'प्रकृत्यादिभ्य उपसंख्यानम्' सूत्र से तृतीया विभक्ति होकर तृतीया तत्पुरुष समास हुआ है।

जातं वंशे भुवनविदिते पुष्करावर्तकानां
जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः।
तेनार्थित्वं त्वयि विधिवशाद् दूरबन्धुर्गतोऽहं
याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा ॥६॥

**अन्वय :**

(हे मेघ !) त्वां भुवनविदिते पुष्करावर्तकानां वंशे जातं कामरूपं मघोनः प्रकृतिपुरुषं जानामि, तेन विधिवशात् दूरबन्धुः अहं त्वयि अर्थित्वं गतः। अधिगुणे याच्ञा मोघा (अपि) वरम्, अधमे लब्धकामा (अपि) न (वरम्)।

**शब्दार्थ :**

(हे मेघ !), त्वाम् = (मैं) तुम्हें, जानामि = जानता हूँ (कि तुम), भुवनविदिते = संसार में प्रसिद्ध, पुष्करावर्तकानाम् = पुष्कर और आवर्तक नाम वाले मेघों के, वंशे = कुल में, जातम् = उत्पन्न हुए हो, कामरूपम् = अपनी इच्छा के अनुसार रूप धारण करनेवाले, मघोनः = (तथा) इन्द्र के, प्रकृतिपुरुषम् = प्रधान पुरुष हो, तेन विधिवशात् = इस कारण से दुर्भाग्यवश, दूरबन्धुः = प्रिया से वियुक्त, अहम् = मैं, त्वयि अर्थित्वं गतः = तुम्हारे पास याचना करने आया हूँ। अधिगुणे याच्ञा = अधिक गुण वाले व्यक्ति से की गयी प्रार्थना, मोघा (अपि) = निष्फल हुई (भी), वरम् = अच्छी है, अधमे लब्धकामा (अपि) = नीच के प्रति सफल हुई (भी) न (वरम्) = अच्छी नहीं होती।

**भाषानुवाद :**

(हे मेघ !) मैं तुम्हें जानता हूँ कि तुम संसार में प्रसिद्ध पुष्कर और आवर्तक नाम वाले मेघों के कुल में उत्पन्न हुए हो, अपनी इच्छा के अनुसार रूप धारण करने वाले तथा इन्द्र के प्रधान पुरुष हो, इस कारण दुर्भाग्यवश प्रिया से वियुक्त मैं तुम्हारे पास याचना करने आया हूँ। अधिक गुण वाले व्यक्ति से की गयी प्रार्थना निष्फल हुई भी अच्छी है, नीच के प्रति सफल हुई भी अच्छी नहीं होती।

**संस्कृत-व्याख्या :**

यक्षस्य याचनायाः औचित्यं प्रमाणीकुर्वन् महाकविकालिदासः कथितवान् पद्येऽस्मिन् (हे मेघ !), त्वाम् = भवन्तम्, भुवनविदिते = लोकज्ञाते, जगत्प्रसिद्धे इत्यर्थः। पुष्करावर्तकानाम् + पुष्करावर्तकनामधेयानां मेघानाम् वंशे = कुले, जातम् = उत्पन्नम्, कामरूपम् = इच्छाधीनशरीरम्, मघोनः = इन्द्रस्य, प्रकृतिपुरुषम् = प्रधान पुरुषम्, जानामि = अवगच्छामि, वेद्मि इत्यर्थः। तेन = महाकुलप्रसूतत्वेन कारणेन, विधिवशात् = दुर्भाग्यवशात्, दूरबन्धुः = वियुक्तपत्नीकः, अहम् = यक्षः, त्वयि = भवति, अर्थित्वम् = याचकत्वम्, गतः = प्राप्तः, अधिगुणे = अधिकगुणे पुरुषे, याच्ञा = याचना, मोघा (अपि) = निष्फला (अपि), वरम् = ईषत्प्रियम्, अधमे = निर्गुणे पुरुषे, लब्धकामा (अपि) = सफलाभिलाषा (अपि), न (वरम्) = ईषत्प्रियम् अपि न भवति।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथितवान्—'हे मेघ ! त्वं जगत्प्रसिद्धे पुष्करावर्तकानां कुले जातः। इच्छाधीनरूपः इन्द्रस्य प्रधान-पुरुषश्च असि" इति अहं जानामि। अतएव अहं तव पार्श्वे याचना कर्तुम् आगतवान् अस्मि। सुजने कृता याचना निष्फलाऽपि श्रेष्ठा वर्तते, दुर्जने तु सफलाऽपि श्रेष्ठा न भवति।

अत्र अर्थान्तरन्यासोऽलङ्कारो वर्तते।

**टिप्पणी :**

भुवनविदिते—संसार में प्रसिद्ध। भुवनेषु विदिते (सप्तमी तत्पुरुषसमास)।

पुष्करावर्तकानाम्—पुष्कर और आवर्तक जाति वाले श्रेष्ठ मेघों के। पुष्कराश्च आवर्तकाश्च, तेषाम् (द्वन्द्व समास)।

जातम्-उत्पन्न हुआ। जन्+क्त (त)। प्रकृतिपुरुषम्—प्रधान व्यक्ति। प्रकृतिषु पुरुषम्, तम् (सप्तमी तत्पुरुषसमास)।

दूरबन्धुः-दूर है बन्धु यानी प्रिया जिसकी ऐसा विरही। दूरे बन्धुः यस्य सः (बहुव्रीहिसमास)।

संतप्तानां त्वमसि शरणं तत्पयोद प्रियायाः
सन्देशं मे हर धनपतिक्रोधविश्लेषितस्य।
गन्तव्या ते वसतिरलका नाम यक्षेश्वराणां
बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या॥७॥

**अन्वय :**

पयोद ! त्वं सन्तप्तानां शरणम् असि, तत् धनपति-क्रोधविश्लेषितस्य मे सन्देशं प्रियायाः हर। ते यक्षेश्वराणां बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौत-हर्म्या अलका नाम वसतिः गन्तव्या।

**शब्दार्थ :**

पयोद=हे मेघ ! त्वम्=तुम, सन्तप्तानाम्=सन्तप्त (जनों) की, शरणम् असि=रक्षा करने वाले हो, तत्=इसलिए, धनपतिक्रोध=कुबेर के क्रोध से, विश्लेषितस्य=बिछुड़े हुए, मे=मेरे, सन्देशम्=सन्देश को, प्रियायाः हर=प्रिया के समीप ले जाओ। ते=तुम्हें, बाह्योद्यानस्थित=बाहर के उद्यान में रहने वाले, हरशिरश्चन्द्रिकाधौतहर्म्या=शिव के सिर पर स्थित (चन्द्रमा की) चाँदनी से उज्ज्वल धनिकों के भवनों से सम्पन्न, यक्षेश्वराणाम् अलका नाम वसतिः=यक्षेश्वरों की अलका नाम की पुरी जाना है;

**भाषानुवाद :**

हे मेघ ! तुम सन्तप्तजनों की रक्षा करने वाले हो। इसलिए कुबेर के क्रोध से बिछुड़े हुए मेरे सन्देश को प्रिया के समीप ले जाओ। तुम्हें बाहर के उद्यान में रहने वाले शिव के सिर पर स्थित चन्द्रमा की चाँदनी से उज्ज्वल धनिकों के भवनों से सम्पन्न यक्षेश्वरों की अलका नाम की पुरी जाना है।

**संस्कृत-व्याख्या :**

पद्येऽस्मिन् यक्षः मेघं स्वसन्देशवाक्यानि नेतुं कथयति—

पयोद = हे मेघ !, त्वम् = भवान्, सन्तप्तानाम् = तापपीडितनान्, शरणम् = रक्षकः, असि = वर्तसे, तत् = तस्मात् कारणात्, धनपतिक्रोधविश्लेषितस्य - कुबेर-कोपवियुक्तस्य, मे = मम, सन्देशम् = वार्ताम्, प्रियायाः = कान्तायाः हर = प्रापय। ते = तव, यक्षेश्वराणाम् = श्रेष्ठयक्षाणाम्, बाह्योद्यानस्थित-हरशिरश्चन्द्रिकाधौतहर्म्या = बहिरुद्यानावस्थितशिवमस्तकज्योत्स्नाप्रक्षालितधनिकभवना, अलका नाम = अलकेति प्रसिद्धा, वसतिः = स्थानम्, गन्तव्या = गमनीया।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं प्रति अकथयत् – "हे मेघ ! त्वं तापपीडितानां जनानां रक्षकोऽसि। अतः कुबेरशापात् प्रियावियुक्तस्य मम संदेशं प्रियायाः पार्श्वे नय। त्वया बाह्योपवनस्थितशिवशिरोज्योत्स्नया उज्ज्वलहर्म्या यक्षेश्वराणाम् अलका नाम पुरी गमनीया।"

**टिप्पणी :**

धनपतिक्रोधविश्लेषितस्य-कुबेर के क्रोध से बिछुड़े हुए। धनस्य पतिः (षष्ठी तत्पुरुष समास), तस्य क्रोधः (षष्ठीतत्पुरुष समास), तेन विश्लेषितस्य (तृतीया तत्पुरुष समास)।

बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या— बाहर के उद्यान में स्थित शिव के सिर पर रहने वाले चन्द्रमा की चाँदनी से धवलित हैं महल जिसके। बाह्यम् उद्यानम् (कर्मधारयसमास), तस्मिन् स्थितः (सप्तमी तत्पुरुष समास), तादृशः हरः (कर्मधारय समास), तस्य शिरः (षष्ठीतत्पुरुष समास) तस्य चन्द्रिका (षष्ठी तत्पुरुष समास), तया धौतानि (तृतीया तत्पुरुष समास), तादृशानि हर्म्याणि यत्र सा (बहुव्रीहि समास)।

त्वामारूढं पवनपदवीमुद्गृहीतालकान्ताः
प्रेक्षिष्यन्ते पथिकवनिताः प्रत्ययादाश्वसत्यः।
कः सन्नद्धे विरहविधुरां त्वय्युपेक्षेत जायां
न स्यादन्योऽप्यहमिव जनो यः पराधीनवृत्तिः ॥८॥

**अन्वय :**

पवन पदवीम् आरूढं त्वां पथिकवनिताः प्रत्ययात् आश्वसत्यः उद्गृहीतालकान्ताः प्रेक्षिष्यन्ते। त्वयि सन्नद्धे (सति) विरहविधुरां जायाम् अन्यः अपि कः जनः उपेक्षेत यः अहम् इव पराधीनवृत्तिः न स्यात्।

**शब्दार्थ :**

पवनपदवीम् = आकाश में, आरूढम् = उड़ते हुए, त्वाम् = तुम्हें, पथिकवनिताः = पथिकों की स्त्रियाँ यानी विरहिणी स्त्रियाँ, प्रत्ययात् = विश्वास से, आश्वसत्यः = आशापूर्ण होकर, उद्गृहीतालकान्ताः = केशों के अग्र भाग को ऊपर की ओर किए हुए, प्रेक्षिष्यन्ते = देखेंगी। त्वयि सन्नद्धे = तुम्हारे उमड़ने पर, विरहविधुरां जायाम् = विरह से व्याकुल पत्नी की, अन्यः अपि कः जनः उपेक्षेत = उपेक्षा क्या अन्य भी कोई जन कर सकता है, यः = जो, अहम् इव = मेरी तरह, पराधीनवृत्तिः नः स्यात् = पराधीनवृत्ति वाला न हो यानी दूसरे के अधीन न हो ?

**भाषानुवाद :**

आकाश में उड़ते हुए तुम्हें पथिकों की स्त्रियाँ यानी विरहिणी स्त्रियाँ विश्वास से आशापूर्ण होकर केशों के अग्रभाग को ऊपर की ओर किये हुए देखेंगी। तुम्हारे उमड़ने पर विरह से व्याकुल पत्नी की उपेक्षा क्या अन्य भी कोई जन कर सकता है, जो मेरी तरह पराधीन वृत्ति वाला न हो यानी दूसरे के अधीन न हो ?

**संस्कृत-व्याकरण :**

मेघाच्छादिते सति विरहाकुलजनस्योपरि तस्य प्रभावस्य वर्णनं करोति कविः पद्येऽस्मिन्।

पवनपदवीम् = अभ्रमार्गम्, आकाशम् इत्यर्थः। आरूढम् = प्राप्तम्, त्वाम् = भवन्तम्, पथिकवनिताः = प्रोषितभर्तृकाः, प्रत्ययात् = विश्वासात्. आश्वसत्यः = विश्वसिताः, उद्गृहीतालकान्ताः = उन्नमय्य धृतालकाग्राः, प्रेक्षिष्यन्ते = विलोकयिष्यन्ति, अत्युत्कण्ठतया द्रक्ष्यन्ति इत्यर्थः। त्वयि = भवति, सन्नद्धे (सति) = व्यापृते (सति), विरहविधुराम् = वियोगकृशाम्, जायाम् = पत्नीम्, अन्यः अपि = अपरः अपि, कः जनः = कतमः लोकः, उपेक्षेत = उपेक्षां कुर्यात्, यः = जनः इति भावः, अहम् इव = मत्सदृशः, पराधीनवृत्तिः = परायत्तजीवनकः, न = नहि, स्यात् = भवेत्।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ ! यदा त्वं गगनमार्गे गमनं विधास्यसि तदा त्वां प्रोषितभर्तृकाः स्त्रियः अत्यु-

त्कण्ठतया विश्वासपूर्वकं विलोकयिष्यन्ति। मेघे गगने समागते सति स्वविरहिण्याः प्रियायाः उपेक्षां कोऽपि जनः न करोति। अतः त्वाम् अवलोक्य विरहिणीनाम् अन्तःकरणेषु प्रियतमागमनविश्वासो भविष्यति।"

अत्र अर्थान्तरन्यासोऽलङ्कारो विद्यते।

टिप्पणी :

पवनपदवीम्—वायु-मार्ग यानी आकाश में। पवनस्य पदवी, ताम् (षष्ठी तत्पुरुष समास)। आरूढम्—चढ़े हुए, जाते हुए। आ + रुह् + क्त (त)। उद्गृहीतालकान्ताः—केशों के अग्रभाग को ऊपर उठाकर पकड़े हुए। उद्गृहीताः अलकानाम् कान्ताः (षष्ठीतत्पुरुष समास) याभिः ताः (बहुव्रीहि समास)। पराधीनवृत्तिः—दूसरे के अधीन है जीवन जिसका। पराधीना वृत्तिः यस्य सः (बहुव्रीहि समास)। जायाम्—स्त्री को। जायते अस्याम् इति जाया, ताम् (द्वितीया विभक्ति, एकवचन)।

तां चावश्यं दिवसगणनातत्परामेकपत्नी-
मव्यापन्नामविहितगतिर्द्रक्ष्यसि भ्रातृजायाम्।
आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां
सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि ॥६॥

अन्वय :

(हे मेघ! त्वम्) दिवसगणनातत्पराम् अव्यापन्नाम् एकपत्नीं तां भ्रातृजायाम् अविहतगतिः (सन्) अवश्यं द्रक्ष्यसि। आशाबन्धः कुसुमसदृशं सद्यःपाति अङ्गनानां प्रणयि हृदयं प्रायशः विप्रयोगे रुणद्धि।

शब्दार्थ :

(हे मेघ!, त्वम् = तुम), दिवसगणनातत्पराम् = दिनों को गिनने में तत्पर, अव्यापन्नाम् = जीवित, एकपत्नीं तां भ्रातृजायाम् = (एवं) पतिव्रता उस भाभी को, अविहतगतिः = बिना रोक-टोक के, अवश्यम् = अवश्य, द्रक्ष्यसि = देखोगे। आशाबन्धः = (क्योंकि) आशा का बन्धन, कुसुमसदृशम् = फूल के समान कोमल, सद्यः पाति = शीघ्र टूट जाने वाले, अङ्गनानाम् = स्त्रियों के, प्रणयि हृदयम् = प्रेम भरे हृदय को, प्रायशः = प्रायः, विप्रयोगे = वियोग में, रुणद्धि = रोके रखता है।

भाषानुवाद :

हे मेघ! तुम दिनों को गिनने में तत्पर जीवित एवं पतिव्रता उस भाभी को बिना रोक-टोक के अवश्य देखोगे, क्योंकि आशा का बन्धन फूल के समान

कोमल, शीघ्र टूट जाने वाले स्त्रियों के प्रेम-भरे हृदय को प्रायः वियोग में रोके रखता है।

**संस्कृत-व्याख्या :**

यक्षस्य पत्न्याः शरीरदशां वर्णयति कविः पद्येऽस्मिन्—

(हे मेघ ! त्वम्), दिवसगणनातत्पराम् = अवशिष्टदिन-संख्यानासक्ताम्, अव्यापन्नाम् = न व्यापन्नाम्, अमृताम् इत्यर्थः। एकपत्नीम् = पतिव्रताम्, ताम् = अमूम्, भ्रातृजायाम् = प्रजावतीम्, अविहतगतिः = न विहतगतिः, अविच्छिन्नगमनः इति भावः। अवश्यम् = नूनम्, द्रक्ष्यसि = अवलोकयिष्यसि, आशाबन्धः = तृष्णाबन्धनम्। कुसुमसदृशम् = पुष्पतुल्यम्, सुकुमारम् इत्यर्थः। सद्यः पाति = तत्क्षणभ्रंशनशीलम्, अङ्गनानाम् = अबलानाम् प्रणयि = प्रेमयुक्तम्, हृदयम् = जीवितम्, प्रायशः = प्रायः, विप्रयोगे = विरहे, रुणद्धि = प्रतिबध्नाति।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं प्रति कथयति—"हे मेघ ! मम प्रिया विरहवेदनया मृतप्राया भविष्यति इति अहं संभावयामि, परन्तु यदि त्वं तत्र अतिशीघ्रं गमिष्यसि तर्हि अवश्यमेव तां जीवितां विलोकयिष्यसि, यतोहि प्रियतमागमाशा विरहिण्याः कुसुमसदृशं कोमलं जीवनं महद्-दुःखेऽपि धारयति।"

अत्र सङ्करालङ्कारो वर्तते।

**टिप्पणी :**

दिवसगणनातत्पराम्—दिनों को गिनने में तत्पर। दिवसानां गणना (षष्ठी तत्पुरुष समास), तस्यां तत्परा, ताम् (सप्तमी तत्पुरुष समास)।

अव्यापन्नाम्— जीवित। न व्यापन्ना, ताम् (नञ् समास)।

भ्रातृजायाम्—भाभी को। भ्रातुः जाया भ्रातृजाया, ताम् (षष्ठी तत्पुरुष समास)।

कुसुमसदृशम्—फूल के समान। कुसुमेन सदृशं तत् (तृतीया तत्पुरुष समास)।

रुणद्धि—रोके रखता है। रुध् + लट् (प्रथम पुरुष एकवचन)।

मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वां
वामश्चायं नदति मधुरं चातकस्ते सगर्वः।
गर्भाधानक्षणपरिचयान्नूनमाबद्धमालाः
सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः ॥१०॥

**अन्वय :**

अनुकूलः पवनः त्वां मन्दं मन्दं यथा नुदति । अयं सगर्वः चातकः ते वामः (सन्) मधुरं वदति । गर्भाधान-क्षणपरिचयात् रवे आवद्धमालाः बलाकाः नयनसुभगं त्वां नूनं सेविष्यन्ते ।

**शब्दार्थ :**

अनुकूलः पवनः = अनुकूल पवन, त्वाम् = तुम्हें, मन्दं मन्दं = धीरे-धीरे, यथा नुदति = ठीक ही ले जा रहा है । अयम् = यह, सगर्वः चातकः = अभिमान से युक्त चातक, ते = तुम्हारे, वामः = बायीं ओर, मधुरं वदति = मधुर स्वर से बोल रहा है, गर्भाधानक्षणपरिचयात् = गर्भाधान के उत्सव में परिचय होने से, रवे — आकाश में, आबद्धमालाः बलाकाः — पंक्तिबद्ध होकर बगुलियाँ, नयनसुभगम् — नेत्रों को सुन्दर लगने वाले, त्वां नूनं सेविष्यन्ते — तुम्हारी सेवा अवश्य करेंगी, तुम्हारे पास अवश्य पहुँचेंगी ।

**भाषानुवाद :**

अनुकूल पवन तुम्हें धीरे-धीरे ठीक ही ले जा रहा है । यह अभिमान से युक्त चातक तुम्हारे बायीं ओर मधुर स्वर से बोल रहा है । गर्भाधान के उत्सव में परिचय होने से आकाश में पंक्तिबद्ध होकर बगुलियाँ नेत्रों को सुन्दर लगने वाले तुम्हारी सेवा अवश्य करेंगी ।

**संस्कृत-व्याख्या :**

मेघस्य यात्रायाः शुभशकुनानां वर्णनं करोति कविकालिदासः पद्येऽस्मिन् — अनुकूलः — अनुगुणः, पवनः — वायुः, त्वाम् — भवन्तम्, मन्दं मन्दं — शनैः शनैः, यथा — सदृशम्, नुदति — प्रेरयति, अयम् — एषः, सगर्वः — गर्वयुक्तः, चातकः — सारङ्गः, ते — तव, वामः — वामभागस्थः, मधुरम् — श्राव्यम्, वदति — शब्दं करोति, गर्भाधानक्षणपरिचयात् — समागमोत्सवपरिचयात्, रवे — आकाशे, आबद्धमालाः — बद्धपङ्क्तयः, बलाकाः — बकाङ्गना, नयनसुभगम् — नेत्रसुन्दरम्, त्वाम् — भवन्तम्, नूनम् — अवश्यम्, सेविष्यन्ते — आश्रयिष्यन्ते ।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति — 'हे मेघ ! तव यात्रा शुभा वर्तते । अनुकूलः पवनः मन्दसदृशं त्वां मन्दं प्रेरयति । सगर्वः चातकः तव वामभागे नदति । गर्भाधानोत्सवे परिचयात् आकाशे बलाकाः लोचनसुन्दरं त्वाम् अवश्यम् आश्रयिष्यन्ते ।

**टिप्पणी :**

गर्भाधानक्षणपरिचयात् — गर्भाधान के उत्सव में परिचय होने से । 'क्षण'

का अर्थ है—उत्सव। कुछ लोग 'क्षण' का अर्थ 'स्वरूप काल' भी करते हैं। गर्भस्य आधानम् (षष्ठी तत्पुरुष समास), तदेव क्षण: (कर्मधारय समास), तस्मिन् परिचय:, तस्मात् (सप्तमी तत्पुरुष समास)।

नयनसुभगम्—देखने में सुन्दर। नयनयो: सुभग:, तम् (सप्तमी तत्पुरुष समास)।

सविष्यन्ते—सेवा करेंगी। सेव्+लृट् (प्रथम पुरुष बहुवचन)।

**कर्तुं यच्च प्रभवति महीमुच्छिलीन्ध्रामवन्ध्यां**
**तच्छ्रुत्वा ते श्रवणसुभगं गर्जितं मानसोत्का:।**
**आकैलासाद्बिसकिसलयच्छेदपाथेयवन्त:**
**संपत्स्यन्ते नभसि भवतो राजहंसा: सहाया: ॥११॥**

**अन्वय :**

(हे मेघ!) यत् महीम् उच्छिलीन्ध्राम् अवन्ध्यां च कर्तुं प्रभवति, तत् श्रवणसुभगं ते गर्जितं श्रुत्वा मानसोत्का: बिसकिसलयच्छेदपाथेयवन्त: राजहंसा: नभसि आ कैलासात् भवत: सहाया: सम्पत्स्यन्ते।

**शब्दार्थ :**

(हे मेघ!) यत्=जो, महीम्=पृथिवी को, उच्छिलीन्ध्राम्=कन्दलिका से युक्त, अवन्ध्यां च कर्तुं प्रभवति=और उपजाऊ करने में समर्थ होता है, तत् श्रवणसुभगम्=उस कानों को सुख देने वाले, ते=तुम्हारे, गर्जितम्=गर्जन को, श्रुत्वा=सुनकर, मानसोत्का:=मानसरोवर में जाने के लिए उत्सुक, बिसकिसलयच्छेदपाथेयवन्त:=कमल-नाल के अग्रभाग के टुकड़ों को पाथेय यानी मार्ग का भोजन बनाये हुए, राजहंसा:=राजहंस, नभसि=आकाश में, आ कैलासात्=कैलास पर्वत तक, भवत: सहाया: सम्पत्स्यन्ते=तुम्हारे साथी बन जायेंगे।

**भाषानुवाद :**

(हे मेघ!) जो पृथिवी को कन्दलिका से युक्त और उपजाऊ करने में समर्थ होता है, उस कानों को सुख देने वाले तुम्हारे गर्जन को सुनकर मानसरोवर में जाने के लिए उत्सुक, कमल-नाल के अग्रभाग के टुकड़ों को पाथेय यानी मार्ग का भोजन बनाये हुए राजहंस आकाश में कैलास पर्वत तक तुम्हारे साथी बन जायेंगे।

**संस्कृत-व्याख्या :**

मेघस्य मार्ग-सहायकानां वर्णनं करोति कविकालिदासः पद्येऽस्मिन्—(हे मेघ !), यत्=गर्जितम्, महीम्=पृथिवीम् उच्छिलीन्ध्राम्= उद्गतकन्दलिकाम्, अवन्ध्यां च=सफलां च, कर्तुम्=विधातुम्, प्रभवति=शक्नोति, तत्=तादृशम्, श्रवणसुभगम्=श्रोत्रसुखम्, ते=तव, गर्जितम्=स्तनितम्, श्रुत्वा=आकर्ण्य, मानसोत्काः=मानससरोवरोत्कण्ठिताः, बिसकिसलयच्छेदपाथेयवन्तः=मृणालाग्रखण्डसम्बन्धवन्तः, राजहंसाः=मरालाः, नभसि=गगने, आ कैलासात्=कैलासपर्यन्तम्, भवतः=तव, सहायाः=सहचराः, सम्पत्स्यन्ते=सम्भविष्यन्ति ।

कवेः कथनस्य तात्पर्यम् इदम् अस्ति यत् मेघं प्रति यक्षः कथयति—"हे मेघ ! तव श्रोत्रसुखदं गर्जनं श्रुत्वा मानससरोवरे गमनोत्सुकाः राजहंसाः कैलासपर्वतपर्यन्तं भवतः सहचराः भविष्यन्ति ।"

**टिप्पणी :**

उच्छिलीन्ध्राम्—उगे हैं कुकुरमुत्ते जिसमें। उद्गतानि शिलीन्ध्राणि यस्यां सा उच्छिलीन्ध्रा, ताम् (बहुव्रीहि समास) ।

कर्तुम्-करने के लिए। यहाँ कृ धातु से 'समानकर्तृकेषु तुमुन्' सूत्र से तुमुन् (तुम्) प्रत्यय हुआ है। श्रवणसुभगम्—श्रवणसुखद। श्रवणयोः सुभगं, तत् (सप्तमी तत्पुरुषसमास) ।

मानसोत्का :—मानसरोवर जाने के लिए उत्सुक ।

मानसे उत्काः (सप्तमी तत्पुरुष समास) । मानसरोवर हिमालय के ऊपर कैलास पर्वत के पास अवस्थित है। वर्षाकाल के अतिरिक्त समय में मानसरोवर बर्फ से दूषित हो जाता है। बर्फ से हंसों को रोग लगता है। अतः वर्षाकाल में राजहंस मानसरोवर में जाते हैं, ऐसी प्रसिद्धि है।

बिसकिसलयच्छेदपाथेयवन्त :—कमल नाल के अग्र-भाग के टुकड़ों को मार्ग के भोजन रूप में लिए हुए। बिसस्य किसलयानि (षष्ठी तत्पुरुष समास), तेषां छेदाः (षष्ठी तत्पुरुष समास) ते एव पाथेयम् (कर्मधारयसमास)। यहाँ पाथेय शब्द से 'तदस्यास्त्यस्मिन्निति मतुप्' सूत्र से मतुप् प्रत्यय होकर मादुपधायाश्च मतोर्वोऽयवादिभ्यः' इस सूत्र से मकार के स्थान में वकार हुआ है।

आपृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैलं
वन्द्यैः पुंसां रघुपतिपदैरङ्कितं मेखलासु ।
काले काले भवति भवतो यस्य संयोगमेत्य
स्नेहव्यक्तिश्चिरविरहजं मुञ्चतो बाष्पमुष्णम् ॥१२॥

**अन्वय :**

पुंसां वन्द्यैः रघुपतिपदैः मेखलासु अङ्कितं तुङ्गम् अमुं प्रियसखं शैलम् आलिङ्ग्य आपृच्छस्व, काले काले भवतः संयोगम् एत्य यस्य चिर विरहजम् उष्णं बाष्पं मुञ्चतः स्नेहव्यक्तिः भवति ।

**शब्दार्थ :**

पुंसाम् = लोगों के, वन्द्यैः = अभिवादन के योग्य, रघुपतिपदैः = श्रीरामचन्द्र के चरणों से, मेखलासु = मध्यभाग में, अङ्कितम् = चिह्नित, तुङ्गम् = उन्नत, अमुं प्रियसखं शैलम् आलिङ्ग्य = इस प्रिय मित्र पर्वत का आलिङ्गन कर यानी इस रामगिरि पर्वत का आलिङ्गन कर, आपृच्छस्व = (इससे यात्रा की) आज्ञा लेना, यस्य = जिसका (कि), काले काले = प्रत्येक वर्षाकाल में, भवतः संयोगम् एत्य = तुम्हारे सम्पर्क को पाकर चिरविरहजम् उष्णं बाष्पम् = चिरकाल के वियोग से उत्पन्न गर्म-गर्म अश्रु-जल को, मुञ्चतः = बहाते हुए, स्नेह व्यक्तिः भवति = (तुम्हारे लिए) प्रेम प्रकट होता रहता है ।

**भाषानुवाद :**

लोगों के अभिवादन के योग्य श्रीरामचन्द्र के चरणों से मध्य भाग में चिह्नित, उन्नत इस प्रिय मित्र पर्वत का आलिङ्गन कर यानी इस रामगिरि पर्वत का आलिङ्गन कर इससे यात्रा की आज्ञा लेना, जिसका कि प्रत्येक वर्षाकाल में तुम्हारे सम्पर्क को पाकर चिरकाल के वियोग से उत्पन्न गर्म-गर्म अश्रु-जल को बहाते हुए तुम्हारे लिए प्रेम प्रकट होता रहता है ।

**संस्कृत-व्याख्या :**

'यक्षः रामगिरिम् आलिङ्ग्य तं यात्रार्थम् आज्ञां याचितवा मेघं गन्तुं प्रेरयति' इत्यस्य वर्णनं करोति महाकविकालिदासः पद्येऽस्मिन्—

पुंसाम् = लोकानाम् जनानाम् इत्यर्थः । वन्द्यैः = आराधनीयैः, रघुपतिपदैः —रामचरणन्यासैःमेखलासु = मध्यप्रदेशेषु, अङ्कितम् = चिह्नितम्, तुङ्गम् = उच्चम्, अमुम् = एतम्, प्रियसखम् = अभीष्टमित्रम्, शैलम् = पर्वतम्, आलिङ्ग्य = आश्लिष्य, आलिङ्गनं कृत्वा इत्यर्थः । आपृच्छस्व = 'साधो ! यामि' इति आमन्त्रणेन आनन्दय, काले काले = प्रतिकालम्, भवतः = तव, संयोगम् = सम्पर्कम्, एत्य = प्राप्य, यस्य = शैलस्य इति भावः । चिरविरहजम्—बहुकालवियोगोत्पन्नम्, उष्णम्—अशीतलम्, बाष्पम्—ऊष्माणम्, मुञ्चतः—त्यजतः, स्नेहव्यक्तिः— प्रेमाविर्भावः, भवति—वर्तते ।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति-"हे मेघ ! त्वं रघुपतिपदैः अङ्कितम् इमं रामगिरिम् आलिङ्ग्य आपृच्छस्व । एषः गिरिः

तव प्रियसखा वर्तते। बहुदिनानन्तरं वर्षाकाले सः यदा त्वां पश्यति तदा स्नेहवेगात् विरहोत्पन्नानि अश्रुणि परित्यजति।"

**टिप्पणी :**

प्रियसखम्-प्रिय मित्र को। प्रियः चासौ सखा प्रियसखः, तम् (कर्मधारय-समास)। यहाँ 'राजाऽहः सखिभ्यष्टच्' सूत्र से सखि शब्द से समासान्त टच् (अ) प्रत्यय हुआ है। रघुपतिपदैः—श्रीरामचन्द्र के चरणों से। रघूणां पतिः तस्य पदानि, तैः (षष्ठी तत्पुरुष समास)।

चिरविरहजम्-चिरकाल के वियोग से उत्पन्न। चिरं विरहः चिरविरहः (द्वितीया तत्पुरुष समास), चिरविरहात् जातः चिरविरहजः, तम् (पञ्चमी तत्पुरुष समास)। स्नेहव्यक्तिः—स्नेह की अभिव्यक्ति। स्नेहस्य व्यक्तिः (षष्ठी तत्पुरुष समास)।

मार्गं तावच्छृणु कथयतस्त्वत्प्रयाणानुरूपं
संदेशं मे तदनु जलद श्रोष्यसि श्रोत्रपेयम्।
खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र
क्षीणः क्षीणः परिलघुपयः स्रोतसां चोपभुज्य ॥१३॥

**अन्वय :**

जलद ! तावत् कथयतः (मत्तः) त्वत्प्रयाणानुरूपं मार्गं श्रृणु, यत्र खिन्नः खिन्नः शिखरिषु पदं न्यस्य, क्षीणः क्षीणः स्त्रोतसां परिलघु पयश्च उपभुज्य गन्तासि, तदन श्रोत्रपेयं मे सन्देशं श्रोष्यसि।

**शब्दार्थ :**

जलद—हे मेघ ! तावत्—पहले, कथयतः (मत्तः)-(मेरे द्वारा) कहे जाते हुए, त्वत्प्रयाणानुरूपम्—अपनी यात्रा के अनुकूल, मार्गम्—मार्ग को, श्रृणु—सुन लो, यत्र—यहाँ यानी जिस मार्ग में, खिन्नः खिन्नः—थक-थक कर, शिखरिषु—(तुम) पर्वतों पर, पदं न्यस्य—पैर रखकर यानी विश्राम कर, च—एवं, क्षीणः क्षीणः—बार-बार दुर्बल होने पर, श्रोतसाम्—नदियों के, परिलघु पयः उपभुज्य—हल्के जल का उपभोग कर, गन्तासि—जाओगे, तदनु—तब, श्रोत्रपेयम्—कानों को प्रिय लगने वाले, मे—मेरे, संदेशम्—संदेश को, श्रोष्यसि—सुनोगे।

**भाषानुवाद :**

हे मेघ ! पहले मेरे द्वारा कहे जाते हुए अपनी यात्रा के अनुकूल मार्ग को सुनो, जहाँ यानी जिस मार्ग में थक-थक कर तुम पर्वतों पर पैर रखकर यानी

विश्राम कर एवं बार-बार दुर्बल होने पर नदियों के हल्के जल का उपभोग कर जाओगे, तब कानों को प्रिय लगने वाले मेरे संदेश को सुनोगे।

**संस्कृत-व्याख्या :**

मेघस्य मार्गस्य वर्णनं करोति महाकविकालिदासः पद्येऽस्मिन् —

जलद—हे मेघ ! तावत्—इदानीम्, कथयतः—वदतः, मत्तः इति शेषः। त्वत्प्रयाणानुरूपम्—भवत्प्रस्थानानुकूलम्, मार्गम्—पन्थानम्, शृणु – आकर्णय, यत्र—मार्गे, खिन्नः खिन्नः—अभीक्ष्णक्षीणबलः (सन्) शिखरिषु—पर्वतेषु, पदम्—चरणम् न्यस्य—निक्षिप्य, क्षीणः क्षीणः—अभीक्ष्णं कृशशरीरः (सन्), स्त्रोतसाम्—गिरिनदीप्रवाहाणाम्, परिलघु—गुरुत्वदोषरहितम्. पयः च—जलं च, उपभुज्य—उपयुज्य, गन्तासि—गमिष्यसि, तदनु—तदनन्तरम्, श्रोत्रपेयम्—कर्णपानार्हम् मे—मम, सन्देशम्—वाचिकं श्रोष्यसि—आकर्णयिष्यसि।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ ! सम्प्रति अहं त्वत्प्रयाणानुरूपं मार्गं कथयामि। मार्गेऽस्मिन् त्वं विश्रामाय बहून् पर्वतान् जलपानाय अनेकाः नदीः च प्राप्स्यसि। मार्गकथनानन्तरम् अहं स्वसन्देशं कथयिष्यामि।"

**टिप्पणी :**

त्वत्प्रयाणानुरूपम्—तुम्हारी यात्रा के अनुकूल। तव प्रयाणं त्वत्प्रयाणम् (षष्ठी तत्पुरुष समास)। त्वत्प्रयाणस्य अनुरूपः, तम् (षष्ठी तत्पुरुष समास)।

श्रोत्रपेयम्—सुनने में सुखद। श्रोत्राभ्यां पेयः, तम् (तृतीया तत्पुरुष समास) सन्देशम्-संदेश को। सम् + दिश + घञ्। न्यस्य-रखकर। नि + अस् + ल्यप् (य)।

अद्रेः शृङ्गं हरति पवनः किंस्विदित्युन्मुखीभि-
र्दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभिः।
स्थानादस्मात्सरसनिचुलादुत्पतोदङ्मुखः खं
दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान् ॥१४॥

**अन्वय :**

'पवनः अद्रेः शृङ्गं हरति किंस्वित्' इति उन्मुखीभिः मुग्ध सिद्धाङ्गनाभिः चकित-चकितं दृष्टोत्साहः (त्वम्) सरसनिचुलात् अस्मात् स्थानात् पथि दिङ्-नागानां स्थूलहस्तावलेपान् परिहरन् उदङ्मुखः (सन्) खम् उत्पत।

**शब्दार्थ**

किस्वित्—क्या, पवनः—हवा, अद्रेः शृङ्गम्—पर्वत की चोटी को, हरति—उड़ाये लिए जा रही है ?, इति—इस (जिज्ञासा) से, उन्मुखीभिः—ऊपर मुँह किये हुए, मुग्ध-सिद्धाङ्गनाभि.—सिद्धों की भोली-भाली स्त्रियाँ चकित-चकितम् – बड़े आश्चर्य से, दृष्टोत्साहः—(तुम्हारा) उत्साह देखेंगी, सरस-निचुलात्—आर्द्र स्थल की बेंतों वाले, अस्मात् स्थानात्—इस स्थान से यानी इस आश्रम से, पथि—मार्ग में, दिङ्नागानाम्—दिग्गजों के, स्थूलहस्तावलेपान्—बड़े-बड़े सूंड़ों के प्रहारों से, परिहरन्—बचते हुए, उदङ्मुखः—(तुम) उत्तर दिशा की ओर मुँह किये हुए, खम्—आकाश में, उत्पत—उड़ जाना।

**भाषानुवाद :**

क्या हवा पर्वत की चोटी को उड़ाये लिए जा रही है ? इस जिज्ञासा से ऊपर मुँह किये हुए सिद्धों की भोली-भाली स्त्रियाँ बड़े आश्चर्य से तुम्हारा उत्साह देखेंगी। आर्द्र स्थल की बेंतों वाले इस स्थान से यानी इस आश्रम से मार्ग में दिग्गजों के बड़े-बड़े सूंड़ों के प्रहारों से बचते हुए तुम उत्तर दिशा की ओर मुँह किये हुए आकाश में उड़ जाना।

**संस्कृत-व्याख्या :**

'यक्षः मेघम् उत्तरां दिशं प्रति प्रस्थानं कर्तुं कथयति' इत्यस्य वर्णनं करोति कविः पद्येऽस्मिन्—

पवनः—वायुः, अद्रेः—पर्वतस्य, रामगिरेः इत्यर्थः। शृङ्गम्—शिखरम्, हरति—नयति, किंस्वित्—किम् ? इति—इत्थम् उन्मुखीभिः—उन्नतवदनाभिः, मुग्ध-सिद्धाङ्गनाभिः—मूढसिद्धसुन्दरीभिः, चकितचकितम्—चकितप्रकारम्, दृष्टोत्साहः—विलोकितोद्योगः, सरसनिचुलात्—आर्द्रस्थलवेतसात्, अस्मात्—एतस्मात् स्थानात्—आश्रमात्, पथि—मार्गे, आकाशमार्गे इत्यर्थः। दिङ्नागानाम्—दिग्गजानाम्, स्थूलहस्तावलेपान्—पीवरशुण्डाक्षेपान्, परिहरन्—परित्यजन्, उदङ्मुखः—उत्तराभिमुखः (सन्) खम्—गगनम्, उत्पत—उद्गच्छ।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ ! अतिवेगेन गच्छतः तव उद्योगं दृष्ट्वा 'पवनः पर्वतशृङ्गं हरति किम् ? इत्थं विचिन्त्य मूढा सिद्धाङ्गनाः अतिचकिताः भविष्यन्ति। आर्द्रस्थल-वेतसात् अस्मात् आश्रमात् त्वया आकाशमार्गे दिग्गजानां शुण्डाप्रहारान् परिहरता एव गमनीयम्।"

**टिप्पणी :**

शृङ्गम्—चोटी को। 'कूटोऽस्त्री शिखरं शृङ्गम्' इत्यमरः। मुग्धसिद्धाङ्ग-

नाभिः—सिद्धों की भोली-भाली स्त्रियों के द्वारा। सिद्धानाम् अङ्गनाः (षष्ठी तत्पुरुष समास) मुग्धाश्च ताः सिद्धाङ्गनाः, ताभिः (कर्मधारय समास)। दृष्टोत्साहः—देखा गया है उत्साह यानी उद्योग जिसका। दृष्टः उत्साहः यस्य सः (बहुव्रीहिसमास)। दिङ्नागानाम्-दिग्गजों के। दिशां नागाः, तेषाम् (षष्ठी तत्पुरुष समास)।

दिङ्नाग नाम का एक बौद्ध लेखक भी हुआ है, जिसने 'प्रमाणसमुच्चय' नामक पुस्तक लिखी है। कुछ लोग इन दिङ्नागाचार्य को कालिदास का प्रतिद्वन्द्वी मानते हैं। उनका कहना है कि दिङ्नाग अपने हाथ उठा-उठाकर कालिदास की कविता में दोष दिखाया करते थे। निचुल नामक कालिदास के मित्र-कवि उन दोषों का परिहार किया करते थे। ये सारी बातें प्रमाणित नहीं हैं। पद्य में दिङ्नाग शब्द बहुवचन में है। दिङ्नागाचार्य का अर्थ स्पष्ट करने वाले मल्लिनाथ आदि टीकाकार आदरार्थक बहुवचन मानते हैं, जो प्रतिद्वन्द्वी के लिए भला कैसे प्रयुक्त होगा ? यहाँ 'दिङ्नागानाम्' का अर्थ दिग्गज मानना युक्तिसंगत है।

**रत्नच्छायाव्यतिकर इव प्रेक्ष्यमेतत्पुरस्ताद्**
**वल्मीकाग्रात्प्रभवति धनुःखण्डमाखण्डलस्य।**
**येन श्यामं वपुरतितरां कान्तिमापत्स्यते ते**
**बर्हेणेव स्फुरितरुचिना गोपवेषस्य विष्णोः ॥१५॥**

**अन्वय :**

(हे मेघ !), रत्नच्छायाव्यतिकर इव प्रेक्ष्यम् आखण्डलस्य एतत् धनुष्खण्डम् पुरस्तात् वल्मीकाग्रात् प्रभवति, येन (धनुष्खण्डेन) ते श्यामं वपुः स्फुरितरुचिना बर्हेण गोपवेषस्य विष्णोः (श्यामं वपुः) इव अतितरां कान्तिम् आपत्स्यते।

**शब्दार्थ :**

(हे मेघ !) रत्नच्छायाव्यतिकर इव—रत्नों की कान्ति का सम्मिश्रण-सा, प्रेक्ष्यम्—दीख पड़ने वाला, आखण्डलस्य एतत्—धनुष्खण्डम्—यह इन्द्रधनुष का टुकड़ा, पुरस्तात्—सामने, वल्मीकाग्रात्—बाँम्बी के अग्र भाग से, प्रभवति—निकल रहा है, येन—जिससे, ते—तुम्हारा, श्यामं वपुः—श्यामल शरीर, स्फुरितरुचिना बर्हेण—चमकीली कान्ति वाले मयूर के पंख से, गोपवेषस्य विष्णोः (श्यामं वपुः) इव—गोपवेशधारी विष्णु के शरीर की तरह यानी (कृष्ण के शरीर) की तरह, अतितरां कान्तिम्—अतिशय कान्ति को, आपत्स्यते—प्राप्त कर लेगा।

**भाषानुवाद :**

(हे मेघ ! ) रत्नों की कान्ति का सम्मिश्रण-सा दीख पड़ने वाला यह इन्द्रधनुष का टुकड़ा सामने बाँम्बी के अग्रभाग से निकल रहा है, जिससे तुम्हारा श्यामल शरीर, चमकीली कान्ति वाले मयूर के पंख से गोपवेशधारी विष्णु के शरीर की तरह यानी कृष्ण के शरीर की तरह अतिशय कान्ति को प्राप्त कर लेगा।

**संस्कृत-व्याख्या :**

इन्द्रधनुषः निःसरणस्य तथा मेघस्य शोभायाः वर्णनं करोति कविः पद्येऽस्मिन्—

हे मेघ ! रत्नच्छायाव्यतिकरः—पक्षरागादिमणिप्रभामिश्रणम्, इव—यथा, प्रेक्ष्यम्—दर्शनीयम्, आखण्डलस्य—इन्द्रस्य, एतत्—इदम्, धनुषखण्डम्—कार्मुकशकलम्, पुरस्तात्—अग्रे, वल्मीकाग्रात्—वामलूरविवरात, प्रभवति—आविर्भवति, येन—धनुष्खण्डेन, ते—तव, श्यामम्—कृष्णवर्णम्, वपुः—शरीरम्, स्फुरितरुचिना—उज्ज्वल कान्तिना, बर्हेण—पिच्छेन, गोपवेषस्य—गोपालवेषस्य, विष्णोः—कृष्णस्य, (श्यामम्—कृष्णवर्णम्, वपुः—शरीरम्), इव—यथा, अतितराम्—साऽतिशयम्, कान्तिम्—शोभाम्, आपत्स्यते—प्राप्स्यते।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ! अधुना बहुवर्णशोभितम् इन्द्रधनुष्खण्डं वल्लीकाग्रात् प्रभवति। अनेन तत्र शोभा तादृशी एव भविष्यति यादृशी मयूरपिच्छेन गोपवेषधारिणः कृष्णस्य शोभा भवति स्म।"

अत्र संसृष्टिरलङ्कारो विद्यते।

**टिप्पणी :**

रत्नच्छायाव्यतिकरः—रत्नों की कान्ति का सम्मिश्रण। रत्नानां छाया तासां व्यतिकरः (षष्ठी तत्पुरुष समास)। स्फुरितरुचिना—उज्ज्वल कान्ति वाले। स्फुरिता रुचिः यस्य तत्, तेन (बहुव्रीहिसमास)। आपत्स्यते—प्राप्त कर लेगा। आ + पद् + लृट् (प्रथम पुरुष एकवचन)।

त्वय्यायत्तं कृषिफलमिति भ्रूविलासानभिज्ञैः
प्रीतिस्निग्धैर्जनपदवधूलोचनैः पीयमानः।
सद्यःसीरोत्कषणसुरभि क्षेत्रमारुह्य मालं
किञ्चित्पश्चाद् व्रज लघुगतिर्भूय एवोत्तरेण ॥१६॥

**अन्वय :**

कृषिफलं त्वयि आयत्तम् इति (हेतोः) भ्रूविलासानभिज्ञैः प्रीतिस्निग्धैः जनपदवधूलोचनैः पीयमानः (सन्) मालं क्षेत्रं सद्यः सीरोत्कषणसुरभि आरुह्य किञ्चित् पश्चात् व्रज, भुयः लघुगतिः (सन्) उत्तरेन एव (व्रज)

**शब्दार्थ :**

कृषिफलम्—खेती का फल, त्वयि आयत्तम्—तुम पर निर्भर है, इति (हेतोः)—इस कारण, भ्रूविलासानभिज्ञैः—भ्रूविलास से अनभिज्ञ, प्रीति-स्निग्धैः—(एवं) स्वाभाविक स्नेह से युक्त, जनपदवधूलोचनैः—ग्रामीण स्त्रियो के नेत्रो से, पीयमानः—देखे जाते हुए, सीरोत्कषणसुरभि—(तुम) हल चलाने के कारण सुगन्धित, मालं क्षेत्रम्—'माल' नामक पठार पर, शीघ्रम् आरुह्य—शीघ्र चढ़कर, किञ्चित्—(तुम) कुछ, पश्चात् व्रज—पश्चिम को जाना, भूयः—फिर, लघुगतिः—शीघ्रगामी होते हुए, उत्तरेण एव (व्रज)—उत्तर की ओर ही (मुड़ जाना)।

**भाषानुवाद :**

'खेती का फल तुम पर निर्भर है'—इस कारण भ्रूविलास से अनभिज्ञ एवं स्वाभाविक स्नेह से युक्त ग्रामीण स्त्रियों के नेत्रो से देखे जाते हुए तुम हल चलाने के कारण सुगन्धित माल' नामक पठार पर शीघ्र चढ़कर कुछ पश्चिम को जाना, फिर शीघ्रगामी होते हुए उत्तर की ओर ही मुड़ जाना।

**संस्कृत-व्याख्या :**

मघस्य माल-प्रदेश-गमनस्य वर्णनं करोति कविकालिदासः पद्येऽस्मिन्—

कृषिफलम्—हलकर्मपरिणामः, सस्यम् इत्यर्थः। त्वयि—भवति, आयत्तम्—अधीनम्, इति (हेतोः अस्मात् कारणात् भ्रूविलासानभिज्ञैः—भ्रूविकारज्ञान-रहितैः, प्रीतिस्निग्धैः—प्रेमार्द्रैः, जनपदवधूलोचनैः—पल्लीमहिलानेत्रैः, पीयमानः (सन्)—अवलोक्यमानः (सन्), मालम्—मालनामकम्, क्षेत्रम्—केदारम्, सद्यः—शीघ्रम्, सीरोत्कषणसुरभि—हलोत्कषणसुगन्धितम्, आरुह्य—आरोहण कृत्वा, किञ्चित् पश्चात्—मनाक्-पश्चिमभागेन, व्रज—गच्छ, भूयः—पुनः, लघुगतिः (सन्)—शीघ्रगमनः (सन्), उत्तरेण एव—उत्तरमार्गेण एव, (व्रज—गच्छ)।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ! 'कृषिफल तव अधीनं वर्तते। अस्मात् कारणात् ग्रामीणललनाः निर्निमेषनयनैः सादरं त्वाम् अवलोकयिष्यन्ति। त्वं हलविदारणेन सौरभसम्पन्नं मालाख्यं प्रदेश प्राप्य पश्चिमां दिशं गच्छ, तत्पश्चात् पुनः उत्तरां दिशं प्रति व्रज।"

**टिप्पणी :**

कृषिफलम्-खेती का फल (अन्नादि)। कृषेः फलम् (षष्ठीतत्पुरुष समास)
प्रीतिस्निग्धैः—प्रेम से सनी हुई। प्रीत्या स्निग्धैः (तृतीया तत्पुरुष समास)।

सीरोत्कषणसुरभि—हल से जोते जाने से सुगन्धित। सीरैः उत्कषणम् (तृतीया तत्पुरुष समास), तेन सुरभि (तृतीया तत्पुरुष समास)।
आरुह्य—चढ़कर। आङ् + रुह् + ल्यप् (य)।

त्वामासारप्रशमितवनोपप्लवं साधु मूर्ध्ना
वक्ष्यत्यध्वश्रमपरिगतं सानुमानाम्रकूटः।
न क्षुद्रोऽपि प्रथमसुकृतापेक्षया संश्रयाय
प्राप्ते मित्रे भवति विमुखः किं पुनर्यस्तथोच्चैः ॥१७॥

**अन्वय :**

आम्रकूटः सानुमान् आसारप्रशमितवनोपप्लवम् अध्वश्रमपरिगतम् त्वाम् साधु मूर्ध्ना वक्ष्यति। क्षुद्रः अपि संश्रयाय मित्रे प्राप्ते (सति) प्रथमसुकृतापेक्षया विमुखः न भवति। यः तथा उच्चैः (सः) किं पुनः ?

**शब्दार्थ :**

आम्रकूटः सानुमान्—आम्रकूट पर्वत, आसारप्रशमित-वनोपप्लवम्—मूसलधार वृष्टि से दावाग्नि को शान्त कर देने वाले, अध्वश्रमपरिगतम्—(तथा) मार्ग के श्रम से थके हुए, त्वाम्—तुम्हें, साधु—अच्छी तरह, मूर्ध्ना वक्ष्यति—(अपनी) चोटी से धारण कर लेगा। क्षुद्रः अपि—नीच भी, संश्रयाय—आश्रय के लिए, मित्रे प्राप्ते—मित्र के आने पर, प्रथम सुकृतापेक्षया—प्रथम किये गये उपकारों का ध्यान करके, विमुखः न भवति—विमुख नहीं होता है, यः—(तो) जो, तथा उच्चैः—उस प्रकार ऊँचा हो, (सः) किं पुनः—उसका क्या कहना है ?

**भाषानुवाद :**

आम्रकूट पर्वत मूसलधार वृष्टि से दावाग्नि को शान्त कर देने वाले तथा मार्ग के श्रम से थके हुए तुम्हें अच्छी तरह अपनी चोटी से धारण कर लेगा। नीच व्यक्ति भी आश्रय के लिए मित्र के आने पर प्रथम किये गये उपकारों का ध्यान करके विमुख नहीं होता है तो जो उस प्रकार ऊँचा हो उसका क्या कहना है ?

मेघस्य आम्रकूटपर्वत-गमनस्य वर्णनं करोति कविः पद्येऽस्मिन्—

आम्रकूटः—आम्रकूटनामकः, सानुमान्—पर्वतः, आसारप्रशमितवनोपप्लवम्—धारासंपातनिवारित-दावानलम्, अध्वश्रमपरिगतम्—मार्गपरिश्रम-युक्तम्, त्वाम्—भवन्तम्, साधु—सम्यक्, मूर्ध्ना—शिरसा, वक्ष्यति—धारयिष्यति, क्षुद्रः अपि—कृपणः अपि, संश्रयाय, मित्रे—सुहृदि, प्राप्ते (सति)—आप्ते (सति), आगते इत्यर्थः। प्रथमसुकृतापेक्षया—पूर्वोपकारापेक्षणेन, विमुखः—पराङ्मुखः, न—नहि भवति—वर्तते, यः—जनः इतिभावः। तथा—तेन प्रकारेण, उच्चैः—उन्नतः, (सः—आम्रकूट पर्वतः) किं पुनः—किं भूयः ?

कवेः कथनस्य तात्पर्यम् इदम् अस्ति यत् यक्षः मेघं कथयति—"हे मेघ ! आम्रकूटपर्वतः धारासम्पातेन प्रशमितदावाग्निं मार्गक्लान्तं त्वां मूर्ध्ना सम्यक् रूपेण धारयिष्यति, यतो हि नीचोऽपि जनः आश्रयाय प्राप्तं मित्रं दृष्ट्वा पूर्वोपकारान् स्मृत्वा विमुखः न भवति, यः जनः तादृशः उन्नतोऽस्ति सः विमुखः न भवति। अतः अत्युन्नतः आम्रकूटपर्वतः विमुख न भवितुं शक्नोति।"

अत्र सङ्करालङ्कारो विद्यते।

**टिप्पणी :**

आम्रकूटः—आम्रकूट आम्राः कूटेषु यस्य सः (व्यधिकरणबहुव्रीहिसमास) जिसकी चोटियों पर आम के वृक्ष हैं, उसे आम्रकूट पर्वत कहते हैं।

आसारप्रशमितवनोपप्लवम्—मूसलधार वृष्टि से शान्त कर दिया है दावाग्नि को जिसने। आसारेण प्रशमितः (तृ०त०)। उपप्लवः (षष्ठी तत्पुरुष समास)। आसारप्रशमितो वनोपप्लवो येन सः, तम् (बहुव्रीहिसमास)। अध्वश्रमपरिगतम्—मार्ग की थकावट से युक्त। अध्वनः श्रमः (षष्ठी तत्पुरुष समास)। अध्वश्रमेण परिगतः, तम् (तृतीया तत्पुरुष समास)। विमुखः—विमुख। विरुद्धं मुखं यस्य सः (बहुव्रीहि समास)।

छन्नोपान्तः परिणतफलद्योतिभिः काननाम्रै-

स्त्वय्यारूढे शिखरमचलः स्निग्धवेणीसवर्णे।

नूनं यास्यत्यमरमिथुनप्रेक्षणीयामवस्थां

मध्ये श्यामः स्तन इव भुवः शेषविस्तारपाण्डुः ॥१८॥

**अन्वय :**

(हे मेघ !) स्निग्धवेणीसवर्णे त्वयि शिखरम् आरूढे (सति), परिणतफलद्योतिभिः काननाम्रैः छन्नोपान्तः अचलः मध्ये श्यामः शेषविस्तारपाण्डुः भुवः स्तन इव अमरमिथुनप्रेक्षणीयाम् अवस्थाम् नूनं यास्यति।

(हे मेघ !), स्निग्धवेणीसवर्णे—चिकनी वेणी से यानी चोटी से मिलते-जुलते रंगवाले, त्वयि शिखरम् आरूढे—तुम्हारे (आम्रकूट) के शिखर पर चढ़ जाने से, परिणतफलद्योतिभिः—पके हुए फलों से शोभित, काननाम्रैः—जगली आम्रवृक्षों से, छन्नोपान्तः—घिरे हुए पार्श्वभागों से युक्त, अचलः (आम्रकूट) पर्वत, मध्ये श्यामः—मध्य भाग में काला, शेष विस्तार-पाण्डुः—और शेष विस्तृत भाग में पीला-सा, भुवः स्तनः इव—पृथिवी के स्तन-सदृश (होकर), अमरमिथुनप्रेक्षणीयाम् अवस्थाम्—गगनचारी दम्पतियों द्वारा देखने योग्य अवस्था को, नूनम्—निश्चय ही, यास्यति—प्राप्त करेगा।

**भाषानुवाद :**

हे मेघ ! चिकनी वेणी से यानी चोटी से मिलते-जुलते रंग वाले तुम्हारे (आम्रकूट) के शिखर पर चढ़ जाने से पके हुए फूलों से शोभित जगली आम्रवृक्षों से घिरे हुए पार्श्वभागों से युक्त आम्रकूट पर्वत मध्यभाग में काला और शेष विस्तृत भाग में पीला-सा पृथिवी के स्तन-सदृश होकर गगनचारी दम्पतियों द्वारा देखने योग्य अवस्था को निश्चय ही प्राप्त करेगा।

महाकविः कालिदासः आम्रकूटपर्वतस्य शोभां वर्णयति पद्येऽस्मिन्—

हे मेघ !, स्निग्धवेणीसवर्णे—मसृणकेशबन्धतुल्यवर्णे, कृष्णवर्णे इत्यर्थः। त्वयि—भवति, शिखरम्—कूटम्, आरूढे (सति)—आरुह्य स्थिते (सति), परिणतफल-द्योतिभिः—परिपक्वफलशोभिभिः, काननाम्रैः—वनचूतैः, छन्नोपान्तः—आच्छादितपार्श्वः, अचलः—पर्वतः, मध्ये—अन्तरे, श्यामः—कृष्णवर्णः, शेषविस्तारपाण्डुः—मध्यादन्यत्र विस्तारे पाण्डुवर्णः, भुवः—पृथिव्याः, स्तनः—पयोधरः, इव—यथा, अमरमिथुनप्रेक्षणीयाम्—देवमिथुनदर्शनीयाम्, अवस्थाम्—दशाम्, नूनम्—निश्चयेन, यास्यति—प्राप्स्यति।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ ! यदा कृष्णवर्णः त्वं आम्रकूटपर्वतस्य शिखरे आरूढो भविष्यसि तदा सः काननाम्रैः युक्तः आम्रकूटपर्वतः नूनमेव देवयुग्मैः दर्शनीयां शोभां प्राप्स्यति। आम्रकूटपर्वतः उपरिभागे कृष्णः, अन्यत्र पाण्डुवर्णः सन् पृथिव्याः स्तनस्य इव शोभां प्राप्स्यति।"

अत्र उपमाऽलङ्कारः विद्यते।

**टिप्पणी :**

परिणतफलद्योतिभि.—पके हुए फलों से चमकने वाले। परिणतानि फलानि (कर्मधारयसमास)। परिणत-फलैः द्योतन्ते तच्छीला इति परिणतफल-द्योतिनः, तैः (उपपदसमास)।

स्निग्धवणीसवर्णे—चिकन वेणी से मिलते-जुलते अंग वाले। स्निग्धा चासौ वेणी (कर्मधारयसमास)तस्याः समानः वर्णः यस्य सः तस्मिन् (बहुव्रीहि-समास। काननाम्रैः—वन के आमों से। काननस्य आम्रैः (षष्ठी तत्पुरुष समास)। शेषविस्तारपाण्डुः—बीच वाले भाग को छोड़ कर शेष भाग में पाण्डुवर्ण वाला। शेषः चासौ विस्तारः च (कर्मधारयसमास), तत्र पाण्डुः (सप्तमी तत्पुरुष समास)।

स्थित्वा तस्मिन्वनचरवधूभुक्तकुञ्जे मुहूर्तं
तोयोत्सर्गद्रुततर गतिस्तत्परं वर्त्म तीर्णं।
रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णां
भक्तिच्छेदैरिव विरचितां भूतिमङ्गे गजस्य ॥१९॥

**अन्वय :**

(हे मेघ !) वनचरवधूभुक्तकुञ्जे तस्मिन् (आम्रकूटे) मुहूर्तं स्थित्वा तोयोत्सर्गद्रुततरगतिः (सन्) तत्परं वर्त्म तीर्णः उपलविषमे विन्ध्यपादे विशीर्णां रेवां गजस्य अङ्गे भक्तिच्छेदैः विरचितां भूतिम् इव द्रक्ष्यसि।

**शब्दार्थ :**

(हे मेघ !), वनचरवधूभुक्तकुञ्जे—वनचर की स्त्रियों द्वारा उपभुक्त कुञ्जों वाले, तस्मिन् उस (आम्रकूट पर्वत )पर, मुहूर्तं स्थित्वा—कुछ देर ठहर कर, तोयोत्सर्गं—जल बरसा देने के कारण, द्रुततरगतिः—तेज गतिवाले होकर, तत्परम्—उससे परे का यानी आगे का, वर्त्म तीर्णः—मार्ग लाँघ कर, उपल-विषमे विन्ध्यपादे—(तुम) पत्थरों से ऊबड़-खाबड़ विन्ध्य पर्वत की तलहटी में, विशीर्णाम्—बिखरी हुई रेवाम्—रेवानदी को यानी नर्मदा नदी को, गजस्य अङ्गे—हाथी के मस्तक पर, भक्तिच्छेदैः—चित्रकारी की रेखाओं के, विरचि-ताम्—विभिन्न प्रकारों से बनायी गयी भुतिम् इव—सजावट की तरह, द्रक्ष्यसि—देखोगे।

**भाषानुवाद :**

हे मेघ। वनचर की स्त्रियों द्वारा उपभुक्त कुञ्जों वाले उस आम्रकूट पर्वत पर कुछ देर ठहर कर, जल बरसा देने के कारण तेज गति वाले होकर उससे परे का यानी आगे का मार्ग लाँघ कर तुम पत्थरों से ऊबड़-खाबड़ विन्ध्य पर्वत की तलहटी में बिखरी हुई रेवानदी को यानी नर्मदा नदी को हाथी के मस्तक पर चित्रकारी की रेखाओं के विभिन्न प्रकारों से बनायी गयी सजावट की तरह देखोगे।

**संस्कृत-व्याख्या :**

यक्षः मेघं रेवायाः दर्शनं कर्तुं प्रेरयति' इत्यस्य वर्णनं करोति कविकालिदासः पद्येऽस्मिन्—

(हे मेघ !) वनचरवधूभुक्तकुञ्जे—किरातवनितोपभुक्तलतागृहे, तस्मिन्—अमुष्मिन्, आम्रकूटपर्वते इत्यर्थः। मुहूर्तम्—अल्पकालम्, स्थित्वा—विश्रम्य, तोयोत्सर्गद्रुततरगतिः (सन्)—जलवर्षणेन अतिक्षिप्रगमनः (सन्), तत्परम्—आम्रकूटानन्तरम्, वर्त्म—मार्गम्, तीर्णः—अतिक्रान्तः, उपलविषमे—प्रस्तरनिम्नोन्नते, विन्ध्यपादे—विन्ध्याचलप्रत्यन्तभागे, विशीर्णाम्—प्रसृताम्—रेवाम्—नर्मदाम्, गजस्य—हस्तिनः, अङ्गे—शरीरे, भक्तिच्छेदैः—रेखाभङ्गिभिः, विरचिताम्—रचिताम् निर्मिताम् इत्यर्थः। भूतिम्—शृङ्गारम् इव—यथा, द्रक्ष्यसि—अवलोकयिष्यसि।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ ! किरातवनितोपभुक्तकुञ्जे नेत्रविनोदनार्थं क्षणं विश्रम्य जलम् अभिवृष्य द्रुततरगतिः सन् किञ्चित् अग्रे गत्वा विन्ध्यप्रत्यन्तपर्वते विशीर्णां नर्मदानदीं द्रक्ष्यसि। सा नदी हस्तिनः शरीरे रेखाभङ्गिभिः विरचितां भूतिः इव प्रतिभाति।

अत्र सङ्करालङ्कारो वर्तते।

**टिप्पणी :**

वनचरवधूभुक्तकुञ्जे—वनचर की स्त्रियों द्वारा उपभुक्त हैं निकुञ्ज जिसके। वनचराणां वध्वः (षष्ठी तत्पुरुष समास)। भुक्ताः कुञ्जाः यस्मिन् सः (बहुव्रीहिसमास)। वनचरवधूभिः भुक्तकुञ्जः, तस्मिन् (तृतीयातत्पुरुषसमास)। तोयोत्सर्गद्रुतगतिः—जल बरसा देने से तेज गति वाला। तोयानाम् उत्सर्गः (षष्ठी तत्पुरुष समास), तेन द्रुततरा (तृतीया तत्पुरुष समास), तादृशी गतिः अस्य (बहुव्रीहिसमास)। भक्तिच्छेदः—रेखाओं के प्रकारों से। भक्तीनां छेदाः, तैः (षष्ठी तत्पुरुषसमास)।

तस्यास्तिक्तैर्वनगजमदैर्वासितं वान्तवृष्टि-
जंम्बूकुञ्जप्रतिहतरयं तोयमादाय गच्छेः।
अन्तःसारं घन ! तुलयितुं नानिलः शक्ष्यति त्वां
रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ॥२०॥

**अन्वय :**

घन ! वान्तवृष्टिः (सन्) तिक्तैः, वनगजमदैः वासितं जम्बूकुञ्जप्रतिहत-

रयं तस्याः तोयम् आदाय गच्छेः। अन्तः सारं त्वाम् अनिलः तुलयितुं न शक्ष्यति, हि रिक्तः सर्वः लघुः भवति, पूर्णता गौरवाय (भवति)।

**शब्दार्थ :**

घन—हे मेघ !, वान्तवृष्टिः—(तुम) वृष्टि करके, तिक्तैः वनगजमदैः—वनगज-जंगली हाथियों के, तिक्तैः मदैः—सुगन्धि वाले मद-जल से, वासितम्—सुगन्धित, जम्बूकुञ्जप्रतिहतरयम्—जम्बूकुञ्ज—(और) जामुन के कुञ्जों द्वारा, प्रतिहतरयम्—रोके गये वेग वाले, तस्याः—उस (नर्मदा नदी) के, तोयम्—जल को, आदाय—लेकर, गच्छेः—जाना, अन्तः सारम्—भीतर से ठोस बने हुए, त्वाम्—तुम्हें, अनिलः—हवा, तुलयितुं न शक्ष्यति—हिला नहीं सकेगी, हि—क्योंकि, रिक्तः सर्वः—प्रत्येक खाली (वस्तु), लघुः भवति—हल्की होती है. पूर्णता गौरवाय—(और) पूर्णता गौरव के लिए (होती है)।

**भावानुवाद :**

हे मेघ ! तुम वृष्टि करके जंगली हाथियों के सुगन्धि वाले मद-जल से सुगन्धित और जामुन के कुञ्जों द्वारा रोके गये वेग वाले उस नर्मदा नदी के जल को लेकर जाना। भीतर से ठोस बने हुए तुम्हें हवा हिला नहीं सकेगी, क्योंकि प्रत्येक खाली वस्तु हल्की होती है और पूर्णता गौरव के लिए होती है।

**संस्कृत-व्याख्या :**

'यक्षः रेवायाः जल-ग्रहणं कर्तुं मेघं कथयति' इत्यस्य वर्णनं कविना कृतं पद्येऽस्मिन्—

घन—हे मेघ ! वान्तवृष्टिः (सन्)—उद्‌गीर्णवर्षः (सन्), तिक्तैः—सुगन्धिभिः वनगजमदैः—अरण्यहस्तिदानजलैः, वासितम्—सुरभितम्, जम्बूकुञ्जप्रतिहतरयम्—जम्बूनिकुञ्जप्रतिबद्धवेगम्, तस्याः—अमुष्याः, रेवायाः इत्यर्थः। तोयम्—जलम्, आदाय—गृहीत्वा, गच्छेः—व्रज। अन्तः सारम्—अन्तर्बलम्, त्वाम्—भवन्तम्, अनिलः—पवनः, तुलयितुम्—कम्पयितुम्, न—नहि, शक्ष्यति—शक्तो भविष्यति, हि—यतः, रिक्तः—शून्यः, सर्वः—सकलः, लघुः—लाघव-युक्तः, भवति—वर्तते, पूर्णता—समग्रता, गौरवाय—गुरुत्वाय (भवति—वर्तते)।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—'हे मेघ ! त्वं सुगन्ध्यारण्यगजमदमिश्रं जम्बूकुञ्जप्रतितवेग नर्मदायाः जलम् आदाय गच्छ। अनेन त्वां पवनः तुलयितं न शक्ष्यति, यतोहि सर्वोऽपि रिक्तः लघुः भवति पूर्णश्च गुरुः भवति।

अत्र अर्थान्तरन्यासोऽलङ्कारो विद्यते।

टिप्पणी :

वान्तवृष्टिः—जलवृष्टि किये हुए। वान्ता वृष्टिः येन सः (बहुव्रीहि-समास)। वनगजमदैः—जंगली हाथियों के मद से। वने गजा (सप्तमी तत्पुरुष समास), वनगजानां मदाः, तैः (षष्ठी तत्पुरुषसमास)। अन्तः सारम्—भीतर स्थित है बल जिसके। अन्तः सारः यस्य, तम् (बहुव्रीहिसमास)। तुलयितुम्—हिलाने में यानी उड़ाने में। तुला + णिच् + तुमुन् (तुम्)।

नीपं दृष्ट्वा हरितकपिशं केसरैरर्द्धरूढै-
राविर्भूतप्रथममुकुलाः कन्दलीश्चानुकच्छम्।
जग्ध्वाऽरण्येष्वधिकसुरभिं गन्धमाघ्राय चोर्व्याः।
सारङ्गास्ते जललवमुचः सूचयिष्यन्ति मार्गम् ॥२१॥

अन्वय :

अर्धरूढैः केसरैः हरितकपिशं नीपं दृष्ट्वा अनुकच्छम् आविर्भूतप्रथम-मुकुलाः कन्दलीः च जग्ध्वा अरण्येषु उर्व्याः अधिकसुरभिं गन्धम् आघ्राय सारङ्गाः जललवमुचः ते मार्गं सूचयिष्यन्ति।

शब्दार्थ :

अर्द्धरूढैः=अधखिले, केसरैः—केसरों से, हरित कपिशम्—हरे और धूसर रंग वाले, नीपम्—कदम्ब-पुष्प को, दृष्ट्वा—देखकर, अनुकच्छम्—दलदल में, आविर्भूतप्रथममुकुलाः—उत्पन्न हुई पहली पहली कलियों वाली, कन्दलीः—कन्दलियों को, जग्ध्वा—खाकर, च—और, अरण्येषु—जंगलों में, उर्व्याः—पृथिवी की, अधिकसुरभिं गन्धम्—अत्यधिक सुगन्ध को, आघ्राय—सूंघकर, सारङ्गाः—(क्रमशः) भौंरे, मृग एवं हाथी, जललवमुचः—जल की बून्दों को बरसाने वाले, ते—तुम्हारे, मार्गम्—मार्ग को, सूचयिष्यन्ति—सूचित करेंगे यानी बतायेंगे।

भाषानुवाद :

अधखिले केसरों से हरे और धूसर रंग वाले कदम्ब-पुष्प को देखकर दलदल में उत्पन्न हुई पहली-पहली कलियों वाली कन्दलियों को खाकर और पृथिवी की अत्यधिक सुगन्ध को सूंघकर क्रमशः भौंरे, मृग एवं हाथी जल की बून्दों को बरसाने वाले तुम्हारे मार्ग को सूचित करेंगे यानी बतायेंगे।

संस्कृत-व्याख्या :

'सारङ्गाः मेघ-मार्गं सूचयिष्यन्ति' इत्यस्य वर्णनं करोति कविकालिदासः पद्येऽस्मिन्—

अर्धरूढै:—अर्धोत्पन्नै:, केसरै:—किञ्जल्कै: हरितकपिशम्—श्यामपीतम् नीपम्—कदम्बपुष्पम्, दृष्ट्वा—अवलोक्य, अनुकच्छम्—जलप्रायदेशसमीपे, आविर्भूतप्रथममुकुला:—प्रकटीभूतपूर्वकुड्मला:, कन्दली: च—भूमिकदली: च, जग्ध्वा—खादित्वा, अरण्येषु—वनेषु, उर्व्या:—पृथिव्या:, अधिकसुरभिम्—अतिसुगन्धयुक्तम्, गन्धम्—घ्राणग्राह्यगुणम्, आघ्राय—घ्रात्वा, सारङ्गा: हस्तिन:, भृङ्गा: मृगा: गजा: च इत्यर्थ:। जललवमुच:—सलिलकणमोचकस्य, ते—तव, मार्गम्—पन्थानम्, सूचयिष्यन्ति—अनुमापयिष्यन्ति।

कवे: कथनस्य तात्पर्यम् इदमस्ति तत् यक्ष: मेघं कथयति—"हे मेघ ! अर्धविकसितं कदम्बपुष्पं दृष्ट्वा जलप्रायदेशे प्रथममुकुलिता: कन्दली: च खादित्वा तथा अरण्येषु पृथिव्या: सुरभितं गन्धं घ्रात्वा भ्रमरा: मृगा: गजा: च जललवमुच:, तव मार्गं सूचयिष्यन्ति।"

अत्र अनुमानालङ्कारो वर्तते।

टिप्पणी :

अर्धरूढै:—आधे खिले हुए। अर्धं यथा तथा रूढा: तै: (सुप्सुपासमास)। हरितकपिशम्—हरा और पीला। हरितं च तत् कपिशम् (कर्मधारय समास)। दृष्ट्वा—देखकर। दृश् + क्त्वा (त्वा)। आविर्भूतप्रथममुकुला:—जिनमें पहले-पहल कलियां प्रकट हुई हैं। प्रथमे मुकुला: (कर्मधारयसमास) आविर्भूता: प्रथममुकुला: यासां ता: (बहुव्रीहिसमास)। जग्ध्वा—खाकर। अद् + क्त्वा (त्वा)। यहाँ अद् धातु के स्थान में 'अदो जग्धिर्ल्यप्ति किति' सूत्र से जग्ध आदेश हुआ है। जललवमुच:—जलकण बरसाने वाले। जलस्य लवा: (षष्ठी तत्पुरुष समास), जललवान् मुञ्चति इति जललवमुचक् तस्य। (उपपद सा०)

उत्पश्यामि द्रुतमपि सखे मत्प्रियार्थं यियासो:

कालक्षेपं ककुभसुरभौ पर्वते पर्वते ते।

शुक्लापाङ्गै: सजलनयनै: स्वागतीकृत्य केका:

प्रत्युद्यात: कथमपि भवान् गन्तुमाशु व्यवस्येत् ॥२२॥

अन्वय :

सखे ! मत्प्रियार्थं द्रुतं यियासो: अपि ते ककुभसुरभौ पर्वते पर्वते कालक्षेपम् उत्पश्यामि। सजलनयनै: शुक्लापाङ्गै: केका: स्वागतीकृत्य प्रत्युद्यात: (सन्) भवान् कथमपि आशु गन्तुं व्यवस्येत्।

शब्दार्थ :

सखे—हे मित्र !, मत्प्रियार्थम्—(मेरी) [illegible] करता हूँ कि, मत्प्रियार्थम्

—मेरी प्रिया के लिए, द्रुतमपि यियासोः अपि—जल्दी-जल्दी जाना चाहते हुए भी, ते—तुम्हें, ककुभसुरभौ—चमेली के फूलों से सुगन्धित, पर्वते पर्वते—प्रत्येक पर्वत पर, कालक्षेपम् (कुछ) देर लग (ही) जायेगी, सजलनयनैः—(फिर भी आनन्द के कारण) सजल नेत्रों वाले पानी छलकते हुए नेत्रों वाले, शुक्लापाङ्गैः—मयूरों द्वारा, केकाः—(अपनी) टें-टें की ध्वनि को, स्वागतीकृत्य—'स्वागत' का शब्द बनाकर, प्रत्युद्यातः—अभिनन्दित किये जाते हुए, भवान्—आप (तुम), कथमपि—किसी तरह, आशु—शीघ्र, गन्तुं व्यवस्येत्—जाने का प्रयत्न करना।

भावानुवाद :

हे मित्र ! मैं संभावना करता हूँ कि जल्दी-जल्दी जाना चाहते हुए भी तुम्हें चमेली के फूलों से सुगन्धित प्रत्येक पर्वत पर कुछ देर लग ही जायेगी। फिर भी आनन्द के कारण सजलनेत्रों वाले पानी छलकते हुए नेत्रों वाले मयूरों द्वारा अपनी टें-टें की ध्वनि को 'स्वागत' का शब्द बनाकर अभिनन्दित किये जाते हुए तुम किसी तरह शीघ्र जाने का प्रयत्न करना।

संस्कृत व्याख्या :

यक्षः मेघं शीघ्रं गन्तुं कथयति इत्यस्य वर्णनं कविकालिदासः करोति पद्येऽस्मिन्—

सखे—हे मित्र ! मत्प्रियार्थम्—मत्प्रियार्थं, द्रुतम्—शीघ्रम्, यियासोः अपि—यातुमिच्छोः अपि, ते—तव, ककुभसुरभौ—कुटजकुसुमसुगन्धिनि, पर्वते पर्वते—शैले-शैले, कालक्षेपम्—समयविलम्बम, उत्पश्यामि—उत्प्रेक्षे। सजलनयनैः—सजलनेत्रैः, आनन्दाश्रुसहितनेत्रैः इत्यर्थः। शुक्लापाङ्गैः—मयूरैः, केकाः—स्ववाणीः, स्वागतीकृत्य—स्वागत वचनीकृत्य, प्रत्युद्यातः (सन्)—प्रत्युद्गतः (सन्), भवान्—त्वम्, मेघः इति भावः। कथमपि—केनापि प्रकारेण, आशु—शीघ्रम्, गन्तुम्—यातुम्, व्यवस्येत्—उद्युञ्जीत।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ ! मत्प्रियार्थं शीघ्रं जिगमिषोः अपि तव कुटजपुष्पसुरभौ पर्वते पर्वते कालविलम्बं संभावयामि। अतः स्नेहयुक्तैः मयूरैः प्रत्युद्गतः त्वं केनापि प्रकारेण शीघ्रगमनाय उद्योगं कुरु।"

अत्र परिणामालङ्कारो वर्तते।

टिप्पणी :

मत्प्रियार्थम्—मेरी प्रिया के लिए। मम प्रिया मत्प्रिया (षष्ठीतत्पुरुष समास) तस्यै इदम् यथा (चतुर्थी तत्पुरुष समास)। ककुभसुरभौ—कुटज के

फूलों से सुगन्धित। ककुभैः सुरभिः तस्मिन् (तृतीया तत्पुरुष समास)। शुक्लापाङ्गैः—मयूरों द्वारा। शुक्लौ अपाङ्गौ येषां ते शुक्लापाङ्गाः, तैः (बहुव्रीहिसमास) प्रत्युद्यातः—अभिनन्दित किये जाते हुए। प्रति+उद्+या+क्त (त)।

पाण्डुच्छायोपवनवृतयः केतकैः सूचिभिन्नै-
र्नीडारम्भैर्गृहबलिभुजामाकुलग्रामचैत्याः।
त्वय्यासन्ने परिणतफलश्यामजम्बूवनान्ताः
संपत्स्यन्ते कतिपयदिनस्थायिहंसा दशार्णाः ॥२३॥

**अन्वय :**

(हे मेघ !) त्वयि आसन्ने (सति) दशार्णाः सूचिभिन्नैः केतकैः पाण्डुच्छायोपवनवृतयः, गृहबलिभुजां नीडारम्भैः आकुलग्रामचैत्याः परिणतफलश्यामजम्बूवनान्ताः (तथा) कतिपयदिनस्थायिहंसाः सम्पत्स्यन्ते।

**शब्दार्थ :**

(हे मेघ !) त्वयि आसन्ने=तुम्हारे निकट आ जाने पर, दशार्णाः=दशार्ण देश (में), उपवनवृतयः=उद्यानों की चहारदीवारी, सूचिभिन्नैः=अग्रभाग में खिले हुए, केतकैः=केतकी-पुष्पों से, पाण्डुच्छाया=पीली-सी हो जायेगी, ग्राम-चैत्याः=गाँव की गलियों के पवित्र (पीपल आदि) वृक्ष, गृहबलिभुजाम्=घर की बलि खाने वाले (कौए आदि पक्षियों के), नीडारम्भैः=घोसलों के निर्माण से, आकुल भर जायेंगे, परिणतफलश्यामजम्बूवनान्ताः=वनान्ताः-(तथा) जंगलों के प्रान्तभाग, परिणतफलश्यामजम्बू—जामुन के पके हुए फलों से काले (हो जायेंगे), कतिपयदिनस्थायिहंसाः सम्पत्स्यन्ते=(और) हंस कुछ ही दिनों तक ठहर पायेंगे।

**भाषानुवाद :**

हे मेघ ! तुम्हारे निकट आ जाने पर दशार्ण देश में उद्यानों की चहारदीवारी अग्रभाग में खिले हुए केतकी-फूलों से पीली-सी हो जायेगी, गाँव की गलियों के पवित्र पीपल आदि वृक्ष घर की बलि खाने वाले कौए आदि पक्षियों के घोसलों के निर्माण से भर जायेंगे तथा जंगलों के प्रान्तभाग जामुन के पके हुए फलों से काले हो जायेंगे और हंस कुछ ही दिनों तक ठहर पायेंगे।

**संस्कृत-व्याख्या :**

दशार्णदेशस्य वर्णनं करोति कविकालिदासः पद्येऽस्मिन् (हे मेघ !), त्वयि=भवति, आसन्ने (सति)=सन्निकृष्टे (सति), दशार्णाः=दशार्णाः नाम

जनपदाः,सूचिभिन्नैः = मुकुलाग्रविकसितैः,केतकैः = केतकीपुष्पैः पाण्डुच्छायोपवन-वृतयः = हरितवर्णोपवनावरणाः, गृहबलिभुजाम् = गेहबलिभोजिनाम्, नीडा-रम्भैः = कुलायनिर्माणैः, आकुलग्रामचैत्याः = संकीर्णसंवसथरथ्यावृक्षाः, परिण-तफलश्यामजम्बूवनान्ताः = परिपक्वफलकृष्णजम्बूवनरम्याः, कतिपयदिनस्थायि-हंसाः = स्वल्पकालस्थायिहंसाः, सम्पत्स्यन्ते = भविष्यन्ति ।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ ! त्वयि सन्निकटे गते सति दशार्णदेशोपवनानि केतकीपुष्पैः हरितवर्णप्राचीर-युक्तानि ग्रामरथ्यावृक्षाः च काकादिपक्षिणां कुलायनिर्माणैः संकीर्णाः जम्बुवनानि च परिणतफलैः श्यामानि भविष्यन्ति एवञ्च तत्र हंसाः कतिपयदिनानि यावत् स्थास्यन्ति ।"

**टिप्पणी :**

सूचिभिन्नैः—कलियों के अग्रभाग में खिले हुए । सूचिषु भिन्नानि, तैः । (सप्तमी तत्पुरुष समास) । आकुलग्रामचैत्याः—गाँव की गलियों के पवित्र (पीपल आदि) वृक्ष (जिनसे) भरे-पड़े हैं । आकुलानि ग्रामस्य चैत्यानि येषु, ते (बहुव्रीहि समास) । परिणतफलश्यामजम्बूवनान्ताः— पके हुए फलों से काले हो गये हैं जम्बूवन के भाग जिसमें । परिणतफलैः श्यामानि (तृतीया तत्पुरुषसमास) जम्बूवनानां वनानि (षष्ठी तत्पुरुषसमास) । परिणतफलश्यामानि च तानि जम्बूवनानि (कर्मधारय समास) । परिणतफलश्यामजम्बूवनैः अन्ताः (तृतीया तत्पुरुष समास) ।

तेषां दिक्षु प्रथितविदिशालक्षणां राजधानीं
गत्वा सद्यः फलमविकलं कामुकत्वस्य लब्धा ।
तीरोपान्तस्तनितसुभगं पास्यसि स्वादु यस्मात्
सभ्रूभङ्गं मुखमिव पयो वेत्रवत्याश्चलोर्मि ॥२४॥

**अन्वय :**

दिक्षु प्रथितविदिशालक्षणां तेषां राजधानीं गत्वा सद्यः कामुकत्वस्य अविकलं फलं लब्धा यस्मात् (त्वम्) वेत्रवत्याः स्वादु चलोर्मि पयः सभ्रूभङ्गं मुखम् इव तीरोपान्तस्तनितसुभगं पास्यसि ।

**शब्दार्थ :**

तेषाम् = उस (दशार्णदेश) की, दिक्षु = दिशाओं में, प्रथितविदिशालक्षणाम् = विदिशा नाम से सुप्रसिद्ध, राजधानीं गत्वा = राजधानी में जाकर, सद्यः =

(तुम) शीघ्र ही, कामुकत्वस्य = कामुकता के, अविकलं फलम् = समस्त फल को, लब्धा = प्राप्त करोगे, यस्मात्—क्योंकि (त्वम्) वेत्रवत्याः = (तुम) वेत्रवती नदी के, स्वादु = स्वादिष्ट, चलोर्मि = (एवं) चञ्चल लहरों वाले, पयः = जल को, सभ्रूभङ्गम् = भ्रूविलास से युक्त, मुखम् इव = (नायिका के) अधर की तरह, तीरोपान्तस्तनितसुभगम् = तट-प्रान्त में मधुर गर्जन करने के साथ-साथ, पास्यसि = पीओगे ।

भाषानुवाद :

उस दशार्णदेश की दिशाओं में विदिशा नाम से सुप्रसिद्ध राजधानी में जाकर तुम शीघ्र ही कामुकता के समस्त फल को प्राप्त करोगे, क्योंकि तुम वेत्रवती नदी के स्वादिष्ट एवं चञ्चल लहरों वाले जल को भ्रूविलास से युक्त नायिका के अधर की तरह तट-प्रान्त में मधुर गर्जन करने के साथ-साथ पीओगे ।

संस्कृत-व्याख्या :

महाकवि : कालिदासः विदिशानगर्याः वर्णनं करोति पद्येऽस्मिन्—

दिक्षु = दिशासु, प्रथितविदिशालक्षणाम् = प्रसिद्धविदिशेतिनामधेयाम्, तेषाम् = तासाम्, दशार्णानाम् इत्यर्थः । राजधानीम्—प्रधाननगरीम्, गत्वा = गमनं कृत्वा, प्राप्य इत्यर्थः । सद्यः = तत्क्षणम्, कामुकत्वस्य = विलासितायाः, अविकलम् = समस्तम्, फलम् = प्रयोजनम्, लब्धा = लप्स्यते, त्वया इति भावः । यस्मात् = कारणात्, (त्वम्), वेत्रवत्याः = वेत्रवतीनद्याः, स्वादु = मधुरम्, चलोर्मि = तरङ्गितम्, पयः = जलम्, सभ्रूभङ्गम् = भ्रूकुटियुक्तम्, मुखम् = आननम्, अधरम् इति भावः । इव = यथा, तीरोपान्तस्तनितसुभगम् = तटप्रान्तगर्जितमनोहरम्, पास्यसि = पानं करिष्यसि ।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ ! त्वं विदिशानामधेयां दशार्णानां सुप्रसिद्धां राजधानीं गत्वा विलासितायाः समस्तं फलं प्राप्स्यसि, यतो हि त्वं तत्र वेत्रवत्याः चञ्चलतरङ्गयुक्तस्य मधुरस्य जलस्य सगर्जनं तथैव पानं करिष्यसि यथा कश्चित् कामुकोजनः कस्यापि नायिकायाः भ्रूविलासयुक्तम् अधरं पिबति ।

अत्र उपमाऽलङ्कारो विद्यते ।

टिप्पणी :

वेत्रवत्याः—वेत्रवती नदी का । यह नदी मध्यप्रदेश में बहती है ।

अविकलम्—समस्त । विगता कला यस्य तद् विकलम् (बहुव्रीहिसमास) ।

चलोर्मि—चञ्चल तरंगों से युक्त । चला ऊर्मिः यस्य तत् (बहुव्रीहिसमास) ।

मुखम्—मुख को, यहाँ 'मुख' का अर्थ है—अधर। भोगविलास का महान् फल अधर-पान ही समझा जाता है। जैसा कि कामशास्त्र में कहा गया है—

"कामिनामधरास्वादः सुरतादतिरिच्यते।"

नीचैराख्यं गिरिमधिवसेस्तत्र विश्रान्तिहेतो-
स्त्वत्संपर्कात्पुलकितमिव प्रौढपुष्पैः कदम्बैः।
यः पण्यस्त्रीरतिपरिमलोद्गारिभिर्नागराणा-
मुद्दामानि प्रथयति शिलावेश्मभिर्यौवनानि ॥२५॥

**अन्वय :**

(हे मेघ !) तत्र विश्रान्तिहेतोः (त्वम्) प्रौढपुष्पैः कदम्बैः त्वत्सम्पर्कात् पुलकितम् इव नीचैराख्यं गिरिम् अधिवसेः, यः (गिरिः) पण्यस्त्रीरतिपरिमलोद्गारिभिः शिलावेश्मभिः नागराणाम् उद्दामानि यौवनानि प्रथयति।

**शब्दार्थ :**

(हे मेघ !), तत्र—वहाँ यानी उस विदिशा नगरी में, विश्रान्तिहेतोः त्वम्—(तुम) विश्राम करने के लिए, त्वत्सम्पर्कात्—तुम्हारे सम्पर्क से, प्रौढपुष्पैः—विकसित पुष्पों वाले, कदम्बैः—कदम्ब वृक्षों द्वारा, पुलकितम् इव—रोमाञ्चित-से हुए, नीचैः आख्यम्—'नीचैः' नाम वाले, गिरिम् अधिवसेः—पर्वत पर ठहरना, यः—जो, पण्यस्त्रीरतिपरिमल—वेश्याओं की रतिक्रीड़ा में प्रयुक्त सुगन्ध को, उद्गारिभिः—उगलने वाली यानी फैलाने वाली, शिलावेश्मभिः—पत्थर की गुफाओं द्वारा, नागराणाम्—नगरवासियों के, उद्दामानि यौवनानि—उभरे हुए यौवन को, प्रथयति—प्रकट करता है।

**भाषानुवाद :**

हे मेघ ! वहाँ यानी उस विदिशा नगरी में तुम विश्राम करने के लिए तुम्हारे सम्पर्क से विकसित पुष्पों वाले कदम्ब वृक्षों के द्वारा रोमाञ्चित-से हुए 'नीचैः' नाम वाले पर्वत पर ठहरना, जो वेश्याओं की रतिक्रीड़ा में प्रयुक्त सुगन्ध को उगलने वाली यानी फैलानेवाली पत्थर की गुफाओं द्वारा नगरवासियों के उभरे हुए यौवन को प्रकट करता है।

**संस्कृत-व्याख्या :**

'यक्षः मेघं नीचैर्गिरौ विश्रामं कर्तुं कथयन् अस्ति' इत्यस्य वर्णनं कविः करोति पद्येऽस्मिन्—

हे मेघ !, तत्र—तस्याम्, विदिशायाम् इत्यर्थः। विश्रान्तिहेतोः—स्वेदापनयकारणात्, (त्वम्), प्रौढपुष्पैः—विकसितकुसुमैः, कदम्बैः—नीप-

वृक्षैः, त्वत्सम्पर्कात्—भवत्सङ्गात्, पुलकितम्—सञ्जातरोमाञ्चकम्, इव—यथा, नीचैराख्यम्—नीचैसंज्ञकम्, गिरिम्—पर्वतम्, अधिवसेः—अधिवासं कुर्याः, यः—नीचैर्गिरिः, पण्यस्त्रीरतिपरिमलोद्गारिभिः—वेश्यारमणसौरभाविष्कारिभिः, शिलावेश्मभिः—प्रस्तरगेहैः, कन्दरैः इत्यर्थः। नागराणाम्—पौराणाम्, उद्दामानि—उत्कटानि, यौवनानि—तारुण्यानि, प्रथयति—प्रकटयति।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत यक्षः मेघं कथयति—"हे मेघ! पुष्पितकदम्बवृक्षैः रोमाञ्चितमिव नीचैर्गिरिं प्राप्य तत्र त्वया विश्रामः करणीयः। यः गिरिः वेश्यारतिक्रीडाप्रयुक्तैः परिमलोद्गारिभिः प्रस्तरकन्दरैः पुरवासिनाम् उत्कटानि यौवनानि प्रकटी करोति।

अत्र उत्प्रेक्षाऽलङ्कारः।

**टिप्पणी :**

प्रौढपुष्पैः—खिले हुए फूलों वाले। प्रौढानि पुष्पाणि येषु, तैः (बहुव्रीहि समास)। पण्यस्त्रीरतिमलोद्गारिभिः—वेश्याओं की रतिक्रीड़ा में प्रयुक्त गन्ध को उगलने वाले। पण्यस्त्रीणां रतयः (षष्ठी तत्पुरुष), तासु परिमलः पण्यस्त्रीरतिपरिमलः (सप्तमीतत्पुरुष समास)। पण्यस्त्रीरतिपरिमलम् उद्गिरन्ति इति तच्छीलानि पण्यस्त्रीरतिपरिमलोद्गारीणि, तैः (उपपद समास)। प्रथयति—प्रकट करता है। प्रथ + णिच + लट् + तिप्।

विश्रान्तः सन्व्रज नगनदीतीरजानां निषिञ्चन्
उद्यानानां नवजलकणैर्यूथिकाजालकानि।
गण्डस्वेदापनयनरुजाक्लान्तकर्णोत्पलानां
छायादानात्क्षणपरिचितः पुष्पलावीमुखानाम् ॥२६॥

**अन्वय :**

तत्र (नीचैः गिरौ) विश्रान्तः (सन्) नगनदीतीरजानाम् उद्यानानाम् यूथिकाजालकानि नवजलकणैः निषिञ्चन् गण्डस्वेदापनयरुजाक्लान्तकर्णोत्पलानां पुष्पलावीमुखानां छायादानात् क्षणपरिचितः (सन्) व्रज।

**शब्दार्थ :**

(तत्र—वहाँ, नीचैः गिरौ—नीचैः नाम वाले पर्वत पर), विश्रान्तः सन्—विश्राम कर, नगनदीतीरजानाम्—पहाड़ी नदियों के तट पर उत्पन्न, उद्यानानाम्—उद्यानों की, यूथिकाजालकानि—जूही की कलियों को, नवजलकणैः—नये जल की बून्दों से, सिञ्चन्—सींचते हुए, गण्डस्वेदापनयरुजा—गालों के पसीने को पोंछने की बाधा से, क्लान्तकर्णोत्पलानाम्—जिनके कर्णभूषणकमल मुरझा गये होंगे, पुष्पलावीमुखानाम्—फूलों को तोड़ने वाली उन

मालिनियों के मुखों का, छायादानात्—छाया देने के कारण, क्षणपरिचितः—क्षणभर परिचय प्राप्त करके, व्रज—जाना।

भाषानुवाद :

वहाँ नीचैः नाम वाले पर्वत पर विश्राम कर पहाड़ी नदियों के तट पर उत्पन्न, उद्यानों की जूही की कलियों को नये जल की बून्दों से सींचते हुए तथा गालों के पसीने को पोंछने की बाधा से जिनके कर्णभूषण-कमल मुरझा गये होंगे, फूलों को तोड़ने वाली उन मालिनियों के मुखों को छाया देने के कारण क्षणभर परिचय प्राप्त करके जाना।

संस्कृत-व्याख्या :

'यक्षः मेघं पुनः अग्रे एधितुं कथयति' इत्यस्य वर्णनं कविः करोति पद्येऽस्मिन्—

(तत्र नीचैः गिरौ) विश्रान्तः सन्—कृतविश्रामः सन्, नगनदीतीरजानाम्—पर्वतसरित्तटोत्पन्नानाम्, उद्यानानाम्—उपवनानाम्, यूथिकाजालकानि—मागधीपुष्पमुकुलानि, नवजलकणैः—नूतनसलिललवैः, निषिञ्चन्—आर्द्रीकुर्वन्, गण्डस्वेदापनयरुजाक्लान्तकर्णोत्पलानाम्—कपोलघर्मजलदूरीकरणपीडाम्लानश्रोत्रकमलानाम्, पुष्पलावीमुखानाम्—कुसुमावचायिकावदनानाम्, छायादानात्—अनातपवितरणात्, क्षणपरिचितः सन्—किञ्चित्कालसंस्तुतः (सन्), व्रज—गच्छ।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ! नीचैर्गिरौ विश्रामं कृत्वा नवजलेन नगनदीतटोत्पन्नानि यूथिकापुष्पमुकुलानि सिञ्चन् तत्रोद्यानेषु कपोलस्वेदप्रमार्जनपीडया म्लाश्रोत्रकमलानां पुष्पलावीमुखानां छायादानात् क्षणं परिचितः सन् गच्छेः।

अत्र समासोक्तिरलङ्कारो विद्यते।

टिप्पणी :

यूथकाजालकानि—जूही की कलियों को। यूथिकानां जालकानि, तानि (षष्ठी तत्पुरुष समास)। गण्डस्वेदापनयरुजाक्लान्तकर्णोत्पलानाम्—गालों के पसीने को पोंछने की पीड़ा से मुरझा गये हैं, कानों में पहने हुए कमल जिनके। गण्डयोः स्वेदः (षष्ठी तत्पुरुष समास), तस्य अपनयम् (षष्ठी तत्पुरुष समास) तेन रुजा (तृतीया तत्पुरुष समास), गण्डस्वेदापनयरुजया क्लान्तानि (सुप्सुपा समास), तादृशानि कर्णोत्पलानि, एषाम् (बहुव्रीहि समास)। पुष्पलावीमुखानाम्—फूलों को तोड़ने वाली यानी मालिनियों के मुखों का। पुष्पलावीनां मुखानि, तेषाम् (षष्ठी तत्पुरुषसमास)। व्रज-जाओ। व्रज् + लोट् + सिप्।

वक्रः पन्था यदपि भवतः प्रस्थितस्योत्तराशां
सौधोत्सङ्गप्रणयविमुखो मा स्म भूरुज्जयिन्याः ।
विद्युद्दामस्फुरितचकितैस्तत्र पौराङ्गनानां
लोलापाङ्गैर्यदि न रमसे लोचनैर्वञ्चितोऽसि ॥ २७॥

अन्वय :

(हे मेघ !) उत्तराशां प्रस्थितस्य भवतः पन्थाः यदपि वक्रः (तथापि) उज्जयिन्याः सौधोत्सङ्ग प्रणयविमुखः मा स्म भूः । तत्र विद्युद्दामस्फुरणचकितैः लोलापाङ्गैः पौराङ्गनानां लोचनैः यदि न रमसे (तर्हि, त्वम्) वञ्चितः असि ।

शब्दार्थ :

(हे मेघ !) उत्तरस्यां प्रस्थितस्य = उत्तर दिशा की ओर प्रस्थान करते हुए, भवतः पन्थाः = तुम्हारा मार्ग, यदपि = यद्यपि, वक्रः = टेढ़ा होगा, उज्जयिन्याः = (तथापि) उज्जयिनी के, सौधोत्संगप्रणयविमुखः = प्रासादों के ऊर्ध्व-भागों का परिचय प्राप्त करने से विमुख, मा स्म भूः = मत होना । तत्र = वहाँ पर, विद्युद्दामस्फुरणचकितैः = विद्युत् की रेखाओं की चमक से डरने वाली, लोलापाङ्गैः = चञ्चलकटाक्षों से युक्त, पौराङ्गनानां लोचनैः = नगर की स्त्रियों के नेत्रों से, यदि न रमसे = यदि क्रीड़ा नहीं करोगे, (तर्हि त्वम् = तो तुम), वञ्चितः असि = वञ्चित हो जाओगे ।

भावानुवाद :

(हे मेघ !) उत्तर दिशा की ओर प्रस्थान करते हुए तुम्हारा मार्ग यद्यपि टेढ़ा होगा तथापि उज्जयिनी के प्रासादों के ऊर्ध्व भागों का परिचय प्राप्त करने से विमुख मत होना । वहाँ पर विद्युत् की रेखाओं की चमक से डरने वाली चञ्चल कटाक्षों से युक्त नगर की स्त्रियों के नेत्रों से यदि क्रीड़ा नहीं करोगे तो तुम वञ्चित हो जाओगे ।

संस्कृत-व्याख्या :

'यक्षः मेघम् उज्जयिन्याः दर्शनस्य आग्रहं कुर्वन् अस्ति' इत्यस्य वर्णनं करोति कविकालिदासः पद्येऽस्मिन् —

(हे मेघ !) उत्तराशां = उदीचीं दिशं प्रति, प्रस्थितस्य = कृतप्रस्थानस्य, भवतः = तव, पन्थाः = मार्गः, यदपि = यद्यपि, वक्रः = कुटिलः, (तथापि = वक्रत्वे सति), उज्जयिन्याः = विशालनगर्याम्, सौधोत्सङ्गप्रणयविमुखः = धवलभवनोर्ध्वभागपरिचयपराङ्मुखः मा स्म भूः = न भव इत्यर्थः । तत्र = उज्जयिन्याम् विद्युद्दामस्फुरणचकितैः = तडिल्लतास्फुरितभीतैः, लोलापाङ्गैः =

चञ्चलकटाक्षैः, पौराङ्गनानाम् = नागरिकसुन्दरीणाम्, लोचनैः = नयनैः, यदि न रमसे = यदि न क्रीडसि, (तर्हि = तदा, त्वम्), वञ्चितः = प्रतारितः, असि — भवसि।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ! उत्तराशां प्रस्थितस्य तव मार्गः यद्यपि वक्रः भविष्यति तथापि त्वया उज्जयिनी अवश्यमेव दर्शनीया। यदि त्वं तत्रत्यानां विद्युत्स्फुरितभीतैः चञ्चलकटाक्षैः सम्पन्नैः नागरिकसुन्दरीणां नेत्रैः क्रीड़ां न करिष्यसि तर्हि तव जीवनं निष्फलमेव वर्तते।"

टिप्पणी :

उत्तराशाम्—उत्तर दिशा की ओर। उत्तरा च सा आशा, ताम् (कर्मधारयसमास)। विद्युद्दामस्फुरणचकितैः—बिजली की रेखा के चमकने से चकित हुई। विद्युतां दाम (षष्ठी तत्पुरुष समास), तस्य स्फुरणानि (षष्ठी तत्पुरुष समास), तेभ्यः चकितानि, तैः (पञ्चमी तत्पुरुषसमास)। लोलापाङ्गैः चञ्चलकटाक्षों वाली। लोलाः अपाङ्गाः येषां तानि, तैः (बहुव्रीहिसमास)।

वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः
संसर्पन्त्याः स्खलितसुभगं दर्शितावर्तनाभेः।
निर्विन्ध्यायाः पथि भव रसाभ्यन्तरः सन्निपत्य,
स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु ॥२८॥

अन्वय :

पथि वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः, स्खलितसुभगं संसर्पन्त्याः दर्शितावर्तनाभेः निर्विन्ध्यायाः सन्निपत्य रसाभ्यन्तरः भव। हि स्त्रीणां प्रियेषु विभ्रमः आद्यं प्रणयवचनम्।

शब्दार्थ :

पथि = मार्ग में, वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः = लहरों के टकराने से शब्द करने वाले पक्षियों की पङ्क्ति-रूप करधनी वाली, स्खलित सुभगं संसर्पन्त्याः = (पत्थरों पर ठोकर खाकर) मनोहरता के साथ बहने वाली, दर्शितावर्तनाभेः = (तथा) भंवर रूपी नाभि दिखलाने वाली, निर्विन्ध्यायाः सन्निपत्य = निर्विन्ध्या नदी के सम्पर्क में आकर यानी निर्विन्ध्या नदी से मिलकर, रसाभ्यन्तरः भव = रस ग्रहण करना यानी जल अथवा रतिसुख ग्रहण करना, हि = क्योंकि, स्त्रीणां प्रियेषु = प्रेमियों के प्रति किये गये स्त्रियों के, विभ्रमः = हावभाव (ही) आद्यं प्रणयवचनम् – (उनके) प्रथम प्रणयवाक्य हो जाते हैं।

भाषानुवाद :

मार्ग में लहरों के टकराने से शब्द करने वाले पक्षियों की पङ्क्तिरूप करधनी वाली, पत्थरों पर ठोकर खाकर मनोहरता के साथ बहने वाली तथा भँवर रूपी नाभि दिखलाने वाली निर्विन्ध्या नदी के सम्पर्क में आकर यानी निर्विन्ध्या नदी से मिलकर रस ग्रहण करना यानी जल अथवा रतिसुख ग्रहण करना, क्योंकि प्रेमियों के प्रति किये गये स्त्रियों के हावभाव ही उनके प्रथम प्रणयवाक्य हो जाते हैं।

संस्कृत-व्याख्या :

'यक्षः मेघं निर्विन्ध्यायाः रसं ग्रहीतुं कथयन् अस्ति' इत्यस्य वर्णनं करोति कविः पद्येऽस्मिन्—

पथि = मार्गे, वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः = तरङ्गसञ्चलनमुखरहंसपंक्तिकाञ्चीगुणायाः, स्खलितसुभगम् = उपस्खलनमनोहरम्, संसर्पन्त्याः—प्रवहन्त्याः, दर्शितावर्तनाभेः—प्रकटितावर्तनाभेः, निर्विन्ध्यायाः—एतन्नामसरितः, सन्निपत्य—संगत्य, रसाभ्यन्तरः—अन्तः स्थितजलः, भव—एधि। हि—यतोहि, स्त्रीणाम्—ललनानाम, प्रियेषु—कान्तेषु, विभ्रमः—विलास एवं इत्यर्थः। आद्यम्—प्रथमम्, प्रणयवचनम् – प्रार्थनावाक्यम्।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत यक्षः मेघं कथयति—"हे मेघ! त्वं मार्गे तरङ्गसञ्चलनमुखरविहगश्रेणिकाञ्चीगुणायाः, उपस्खलनमनोहरं प्रवहन्त्याः, प्रकटितावर्तनाभेः निर्विन्ध्यायाः रसम् अनुभव, यतोहिं ललनानां प्रियेषु विलासप्रदर्शनमेव प्रथमानि प्रणयवाक्यानि भवन्ति।

अत्र सङ्करालङ्कारो विद्यते।

टिप्पणी :

वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः—लहरों के चलने से शब्द करने वाले पक्षियों यानी हंसों की पंक्ति ही है करधनी जिसकी। वीचीनां क्षोभः (षष्ठी तत्पुरुषसमास), तेन स्तनिताः (तृतीया तत्पुरुषसमास), ते च ते विहगाः (कर्मधारयसमास), तेषां श्रेणिः (षष्ठी तत्पुरुष समास), काञ्च्याः गुणः (षष्ठीतत्पुरुषसमास)। वीचिक्षोभस्तनितविहगश्रेणिः एव काञ्चीगुणो यस्याः (बहुव्रीहिसमास)। स्खलितसुभगम्—लड़खड़ाने से सुन्दरतापूर्वक। स्खलितेन सुभगम् (तृतीया तत्पुरुष समास)। संसर्पन्त्याः—बहने वाली। सम् + सृप् + लट् (शतृ) + ङीप्।

वेणीभूतप्रतनुसलिला तामतीतस्य सिन्धुः
पाण्डुच्छाया तटरुहतरुभ्रंशिभिः जीर्णपर्णैः ।
सौभाग्यं ते सुभग विरहावस्थया व्यञ्जयन्ती
कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः ॥२६॥

**अन्वय :**

सुभग ! वेणीभूतप्रतनुसलिला तटरुहतरुभ्रंशिभिः जीर्णपर्णैः पाण्डुच्छाया सिन्धुः, ताम् अतीतस्य ते सौभाग्य विरहावस्थया व्यञ्जयन्ती येन विधिना कार्श्यं त्यजति सः त्वया उपपाद्यः एव ।

**शब्दार्थ :**

सुभग—हे सौभाग्यशालिन् (मेघ !), वेणीभूतप्रतनुसलिला—वेणी के समान क्षीण जल वाली यानी चोटी के समान थोड़ा जल वाली, तटरुहतरुभ्रंशिभिः—(तथा) तट पर उगे हुए वृक्षों से गरने वाले, जीर्णपर्णैः—सूखे पत्तों द्वारा, पाण्डुच्छाया—पीली कान्ति वाली, सिन्धुः—सिन्धु नदी, ताम् अतीतस्य—उस (निर्विन्ध्या नदी) से पार हुए, ते—तुम्हारे, सौभाग्यम्—अच्छे भाग्य को, विरहावस्थया—(अपनी) विरहावस्था से व्यञ्जयन्ती—प्रकट करती हुई, येन विधिना—जिसविधि से, कार्श्यं त्यजति—अपनी दुर्बलता का परित्याग कर दे, सः (विधिः)—उस विधि को, त्वया एव उपपाद्यः तुम्हें ही करना चाहिए ।

**भाषानुवाद :**

ह सौभाग्यशालिन् मेघ ! वेणी के समान क्षीण जल वाली यानी चोटी के समान थोड़ा जल वाली तथा तट पर उगे हुए वृक्षों से गिरने वाले सूखे पत्तों द्वारा पीली कान्ति वाली सिन्धु नदी, उस निर्विन्ध्यानदी से पार हुए तुम्हारे अच्छे भाग्य को अपनी विरहावस्था से प्रकट करती हुई, जिस विधि स अपनी दुर्बलता का परित्याग कर दे, उस विधि को तुम्हें ही करना चाहिए ।

**संस्कृत-व्याख्या :**

'यक्षः मेघं सिन्धुनद्याः कृशतां दूरीकर्तुं कथयति' इत्यस्य वर्णनं कृतं कवि-कालिदासेन पद्येऽस्मिन्—सुभग—हे सुभग ! वेणीभूतप्रतनुसलिला—वेण्याकार-स्वल्पजला, तटरुहतरुभ्रंशिभिः—तीरोत्पन्नवृक्षस्रंसिभिः, जीर्णपर्णैः—शुष्क-पत्रैः, पाण्डुच्छाया—पीतवर्णा, सिन्धुः—नदी, ताम्—अमूम्, अतीतस्य—प्रोषितस्य, ते— तव, नायकस्य इति भावः । सौभाग्यम्—सुभगत्वम्, विरहा-वस्थया—वियोगदशया, व्यञ्जयन्ती—प्रकटयन्ती, येन—यादृशेन, विधिना—

व्यापारेण, कार्श्यम्—दुर्बलताम्, त्यजति—मुञ्चति, सः—असौ, त्वया—भवता, उपपाद्यः एव—कर्तव्य एव ।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ ! वेणीभूतप्रतनुसलिला, जीर्णपत्रैः पीतवर्णा सिन्धुनदी स्वकीयया विरहावस्थया तव सौभाग्यं प्रकटयति । अतः त्वया तदेव करणीयं येन सा स्वकीयां दुर्बलतां त्यजेत् ।

अत्र समासोक्तिरलङ्कारो विद्यते ।

टिप्पणी :

वेणीभूतप्रतनुसलिला—जिसका थोड़ा-सा जल वेणी-सा यानी चोटी-सा बना हुआ है । वेणीभूतं प्रतनु सलिलं यस्याः, सा (बहुव्रीहिसमास) । तटरुह-तरुभ्रंशिभिः—तट पर उगे हुए वृक्षों से गिरने वाले । तटयोः रुहाः (सप्तमी तत्पुरुष समास), ते च ते तरवः (कर्मधारयसमास), तटरुहतरुभ्यो भ्रश्यन्तीति तच्छीलानि तटरुहतरुभ्रंशीनि, तैः (उपपदसमास) जीर्णपर्णैः—सूखे पत्तों से । जीर्णानि च तानि पर्णानि जीर्णपर्णानि, तैः (कर्मधारयसमास) । व्यञ्जयन्ती—प्रकट करती हुई । वि + अञ्ज् + णिच् + लट् (शतृ) + ङीप् ।

प्राप्यावन्तीनुदयनकथाकोविदग्रामवृद्धान्
पूर्वोद्दिष्टामुपसर पुरीं श्रीविशालां विशालाम् ।
स्वल्पीभूते सुचरितफले स्वर्गिणां गां गतानाम्
शेषैः पुण्यैर्हृतमिव दिवः कान्तिमत्खण्डमेकम् ॥३०॥

अन्वय :

उदयनकथाकोविदग्रामवृद्धान् अवन्तीन् प्राप्य सुचरितफले स्वल्पीभूते गां गतानां स्वर्गिणां शेषैः पुण्यैः हृतकान्तिमत् एकं दिवः खण्डम् इव (स्थिताम्) पूर्वोद्दिष्टां श्रीविशालां विशालां पुरीम् उपसर ।

शब्दार्थ :

उदयनकथाकोविदग्रामवृद्धान्—जहाँ के गाँवों के वृद्ध पुरुष राजा उदयन की कथाओं से सुपरिचित हैं, अवन्तीन् प्राप्य—(ऐसे) अवन्ती देश में पहुँचकर, सुचरितफले स्वल्पीभूते—पुण्यफल के कम हो जाने पर, गां गतानाम्—पृथिवी पर लौट आये, स्वर्गिणाम्—स्वर्गवालों के, शेषैः पुण्यैः—अवशिष्ट पुण्य के द्वारा, हृतम्—लाये हुए, दिवः—स्वर्ग के, कान्तिमत् एकं खण्डम् इव (स्थिताम्)—एक उज्ज्वल टुकड़े की तरह (बनी हुई), पूर्वोद्दिष्टाम्—पूर्व-

निर्दिष्ट, श्रीविशालाम्—सम्पत्तिसम्पन्न, विशालां पुरीम्—विशालानगरी में यानी उज्जयिनी नगरी में, उपसर—जाना।

**भाषानुवाद :**

जहाँ के गाँवों के वृद्ध पुरुष राजा उदयन की कथाओं से सुपरिचित हैं, ऐसे अवन्ती देश में पहुँच कर पुण्यफल के कम हो जाने पर पृथिवी पर लौट आये। स्वर्गवालों के अवशिष्ट पुण्यफल के द्वारा लाये हुए स्वर्ग के एक उज्ज्वल टुकड़े की तरह बनी हुई पूर्वनिर्दिष्ट, सम्पत्ति-सम्पन्न विशालानगरी में यानी उज्जयिनी नगरी में जाना।

**संस्कृत-व्याख्या :**

महाकविकालिदास उज्जयिन्या: वैभवस्य वर्णनं करोति पद्येऽस्मिन्—उदयनकथाकोविदग्रामवृद्धान्—वत्सराजोदयनकथातत्त्वज्ञसंवसथवृद्धान्, अवन्तीन्—मालवदेशान्, प्राप्य—आसाद्य, सुचरितफले-पुण्यफले, स्वल्पीभूते—क्षीणे सति, गाम्—पृथिवीम्, गतानाम्—प्राप्तानाम्, स्वर्गिणाम्—स्वर्गवतां लोकानाम्, शेषैः—भुक्तावशिष्टैः, पुण्यैः—सुकृतैः, हृतम्—आनीतम्, कान्तिमत्—उज्ज्वलम्, एकम्—अन्यत्, दिवः—स्वर्गस्य, खण्डम्—शकलम्, इव—यथा, (स्थिताम्) पूर्वोद्दिष्टाम्—प्रागुक्ताम्, श्रीविशालाम्—सम्पत्तिमतीम्, विशालाम्—उज्जयिनीम्, पुरीम्—नगरीम्, उपसर—गच्छ।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ! त्वम् अवन्तिदेशं प्राप्स्यसि। तत्रत्याः वृद्धलोकाः वत्सराजोदयनकथातत्त्वज्ञाः सन्ति। तत्रत्या उज्जयिनी नगरी स्वर्गवैभवसम्पन्ना वर्तते। अतः त्वया सा अपि दर्शनीया।

अत्र संसृष्टिरलङ्कारो वर्तते।

**टिप्पणी :**

उदयनकथा—उदयन वत्सदेश का राजा था। इसकी राजधानी कौशाम्बी थी। उज्जयिनी के राजा प्रद्योत ने उदयन को बन्दी बना लिया था। इसी क्रम में वीणा सिखाने के कारण प्रद्योत की पुत्री वासवदत्ता से उदयन का प्रेम हो गया। उदयन, वासवदत्ता की सहायता से वहाँ से भाग गया। वह साथ में वासवदत्ता को भी ले गया।

प्राप्य—प्राप्तकर, पहुँचकर। प्र+आप्+ल्यप् (य)। सुचरितफले—पुण्य-फल के। सुचरितस्य फलम्, तस्मिन् (षष्ठीतत्पुरुष समास)। श्रीविशालाम्—शोभा से यानी सम्पत्ति से सम्पन्न। श्रिया विशालां, ताम् (तृतीयातत्पुरुष समास)।

दीर्घीकुर्वन् पटु मदकलं कूजितं सारसानाम्
प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः ।
यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः
शिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ॥३१॥

**अन्वय :**

यत्र प्रत्यूषेपु पटु मदकलं सारसानां कूजितं दीर्घीकुर्वन् स्फुटितकमलामोद-मैत्रीकषायः, अङ्गानुकूलः शिप्रावातः प्रार्थनाचाटुकारः प्रियतमः इव स्त्रीणां सुरतग्लानिं हरति ।

**शब्दार्थ :**

यत्र—जहाँ यानी उज्जयिनी में, प्रत्यूषेपु—प्रातःकाल, सारसानाम्—सारस पक्षियों के, पटु—स्पष्ट, मदकलम्—(एवं) मधुर कूजन को, दीर्घीकुर्वन्—बढ़ाता हुआ, स्फुटितकमलामोदमैत्रीकषायः—प्रस्फुटित कमल-सौरभ के संसर्ग से सुगन्धित, अङ्गानुकूलः—(तथा) अङ्गों को सुख देने वाला, शिप्रावातः—शिप्रानदी का पवन, प्रार्थनाचाटुकारः—(दुबारा रति) की याचना में मीठी-मीठी बातें बनाने वाले यानी चिकनी-चुपड़ी बातें बनाने वाले, प्रियतमः इव—प्रियतम की तरह, स्त्रीणाम्—स्त्रियों की, सुरतग्लानिं हरति—रतिजन्य थकावट को दूर करता है ।

**भाषानुवाद :**

जहाँ यानी उज्जयिनी में प्रातःकाल सारस पक्षियों के स्पष्ट एवं मधुर कूजन को बढ़ाता हुआ, प्रस्फुटित कमल-सौरभ के संसर्ग से सुगन्धित तथा अंगों को सुख देने वाला शिप्रानदी का पवन दुबारा रति की याचना में मीठी-मीठी बातें बनाने वाले यानी चिकनी-चुपड़ी बातें बनाने वाले प्रियतम की तरह स्त्रियों की रतिजन्य थकावट को दूर करता है ।

**संस्कृत-व्याख्या :**

शिप्रानद्याः पवनस्य वर्णनं करोति कविकालिदासः पद्येऽस्मिन्—

यत्र—विशालायाम्, प्रत्यूषेषु—प्रातःकालेषु, पटु—प्रस्फुटम्, मदकलम्—मदाव्यक्तमधुरम्, सारसानाम्—सारसपक्षिणाम्, हंसानाम् इत्यर्थः । कूजितम्—रुतम्, दीर्घीकुर्वन्—विस्तारयन्, स्फुटितकमलामोदमैत्रीकषायः—विकसितोत्पलपरिमलसंसर्गसुरभिः, अङ्गानुकूलः—गात्रसुखस्पर्शः, शिप्रावातः—शिप्रानदीपवनः, प्रार्थनाचाटुकारः—पुनः सुरतार्थं प्रियवचनप्रयोक्ता, प्रियतमः—वल्लभः, इव—यथा, स्त्रीणाम्—प्रमदानाम्, सुरतग्लानिम्—सम्भोगखेदम्, हरति—निवारयति ।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ! उज्जयिन्यां प्रातःकाले कर्णमधुरं सारसपक्षिणां खस्य विस्तारकः विकसितोत्पल-परिमलसंसर्गसुरभिः गात्रसुखस्पर्शश्च शिप्रानदी पवनः पुनः सुरतार्थं प्रियवचन-प्रयोक्ता प्रियतमः इव ललनानां रतिपरिश्रमं दूरीकरोति।"

अत्र उत्प्रेक्षाऽलङ्कारः अस्ति।

**टिप्पणी :**

सारसानाम्—सारस नाम का पक्षी या हंस। सरसि चरन्ति इति (सरस् + अण्) सारसाः तेषाम्। स्फुटितकमलामोदमैत्रीषायः—खिले हुए कमल-गन्ध के संसर्ग से सुगन्धित। स्फुटितानि कमलानि (कर्मधारयसमास), तेषाम् आमोदः (षष्ठी तत्पुरुषसमास), तेन मैत्री (तृतीया तत्पुरुष समास), तथा कषायः (तृतीयातत्पुरुषसमास)। अङ्गानुकूलः-अङ्गों को सुख देने वाला। अङ्गेषु अनुकूलः (सप्तमीतत्पुरुषसमास)। प्रार्थनाचाटुकारः—पुनः रतिक्रीड़ा करने के लिए प्रियवचन कहने वाला। प्रार्थनायां चाटुकारः (सप्तमी तत्पुरुष)। हरति-दूर करता है। हृ + लट् + तिप्।

प्रद्योतस्य प्रियदुहितरं वत्सराजोऽपि जह्रे
हैमं तालद्रुमवनमभूदत्र तस्यैव राज्ञः।
अत्रोद्भ्रान्तः किल नलगिरिः स्तम्भमुत्पाट्य दर्पा-
दित्यागन्तून् रमयति जनो यत्र बन्धूनभिज्ञः॥३२॥

**अन्वय :**

"अत्र वत्सराजः प्रद्योतस्य प्रियदुहितरं जह्रे। अत्र तस्य एव राज्ञः हैमं तालद्रुमवनम् अभूत्। अत्र किल नलगिरिः दर्पात् स्तम्भम् उत्पाट्य उद्भ्रान्तः" इति अभिज्ञः जनः आगन्तून् बन्धून् यत्र रमयति।

**शब्दार्थ :**

अत्र—यहाँ यानी उज्जयिनी में, वत्सराजः—वत्सदेश के राजा उदयन ने, प्रद्योतस्य—(उज्जयिनी के राजा) प्रद्योत की, प्रियदुहितरं जह्रे—प्रिय पुत्री वासवदत्ता का हरण किया था। अत्र—यहाँ, तस्य एव राज्ञः—उसी राजा (प्रद्योत) का, हैम तालद्रुमवनम् अभूत्—सुनहला ताल वृक्षों का वन था। अत्र—यहाँ, नलगिरिः—नलगिरि नामक हाथी, दर्पात्—मद के कारण स्तम्भम् उत्पाट्य—खम्भे को उखाड़ कर, उद्भ्रान्तः किल—इधर-उधर घूमता-फिरता था, इति—इस प्रकार, यत्र—जहाँ (उज्जयिनी में), अभिज्ञः जनः—(पुरानी कथाओं के) जानकार लोग, आगन्तून् बन्धून् रमयति—(दूसरे देश से) आये हुए बन्धुओं का मनोविनोद करते हैं।

**भाषानुवाद :**

'यहाँ यानी उज्जयिनी में वत्सदेश के राजा उदयन ने उज्जयिनी के राजा प्रद्योत की प्रियपुत्री वासवदत्ता का हरण किया था। यहीं उसी राजा प्रद्योत का सुनहला तालवृक्षों का वन था। यहाँ पर नलगिरि नामक हाथी मद के कारण खम्भे को उखाड़कर इधर-उधर घूमता फिरता था, इस प्रकार उज्जयिनी में पुरानी कथाओं के जानकार लोग दूसरे देश से आये हुए बन्धुओं का मनोविनोद करते हैं।

**संस्कृत-व्याख्या :**

उज्जयिन्या सम्बद्धायाः कथायाः वर्णनं करोति कविकालिदासः पद्येऽस्मिन्—

यत्र—इह, उज्जयिन्याम् इत्यर्थः। वत्सराजः—वत्सदेशाधीश्वरः, प्रद्योतस्य—एतन्नामकराज्ञः, प्रियदुहितरम्—अभीष्टपुत्रीम्, वासवदत्ताम् इत्यर्थः। जह्रे—अपहृतवान्। अत्र—इह, तस्य एव—अमुष्य एव, पूर्वोक्तस्य एव, राज्ञः—नृपस्य, प्रद्योतस्य इत्यर्थः। हैमम्—सौवर्णम् तालद्रुमवनम्—तालवृक्षकाननम्, अभूत्—अभवत्। अत्र—इह, स्थले। किल—निश्चयेन, नलगिरिः—नलगिरिनामकः, प्रद्योतस्य गजः इत्यर्थः। दर्पात्—मदात्, स्तम्भम्—आलानम्, उत्पाट्य उद्धृत्य, उद्भ्रान्तः—भ्रमणं विहितवान्। इति—अनेन प्रकारेण, अभिज्ञः—ज्ञाता, जनः—लोकः, आगन्तून्—देशान्तरादागतान्, बन्धून—बान्धवान्, यत्र—उज्जयिन्याम्, रमयति—विनोदयति।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ! उज्जयिन्यां वत्सराजः उदयनः वासवदत्ताम् अपहृतवान्। अत्रैव प्रद्योतस्य सौवर्णं तालद्रुमकाननम् आसीत्। अत्र प्रदेशे नीलगिरिनामकः प्रद्योतगजः मदात् आलानम् उद्घाट्य भ्रमणं कृतवान् आसीत्। अनेन प्रकारेण उज्जयिनीस्थः पूर्वोक्तकथाभिज्ञः लोकः देशान्तरात् आगतान् बन्धून् विनोदयति।"

अत्र भाविकालङ्कारो विद्यते।

**टिप्पणी :**

वत्सराजः—वत्सदेश का राजा (उदयन)। वत्सानां राजा। (षष्ठी तत्पुरुष समास)। यहाँ 'राजाहः सखिभ्यष्टच्' सूत्र से टच् (अ) प्रत्यय करने पर राजा का 'राजः' हुआ है। प्रियदुहितरम्—प्रिय पुत्री को। प्रिया चाऽसौ दुहिता, ताम् (कर्मधारय समास)। जह्रे-हर ले गया। हृ + लिट् (प्रथम पुरुष एकवचन)। हैमम्—सुनहला। हेम्नः इदम्, हेमन् + अण्। उद्भ्रान्तः—भ्रमण किया था। उद् + भ्रम् + क्त (कर्तरि)। रमयति—मनोविनोद करता है। रम् + णिच् + लट् + तिप्।

हारांस्तारांस्तरलगुटिकान् कोटिशः शङ्खशुक्तीः
शष्पश्यामान् मरकतमणीनुन्मयूखप्ररोहान् ।
दृष्ट्वा यस्यां विपणिरचितान् विद्रुमाणां च भङ्गान्
संलक्ष्यन्ते सलिलनिधयस्तोयमात्रावशेषाः ॥३३॥

**अन्वय :**

यस्यां कोटिशः विपणिरचितान् तारान् तरलगुटिकान् हारान् शङ्खशुक्तीः शष्पश्यामान् उन्मयूखप्ररोहान् मरकतमणीन् विद्रुमाणां भङ्गान् च दृष्ट्वा सलिलनिधयः तोयमात्रावशेषाः संलक्ष्यन्ते ।

**शब्दार्थ :**

यस्याम्—जिस (उज्जयिनी) में, विपणिरचितान्—बाजारों में (बिक्री के लिए) सजाये हुए, कोटिशः—करोड़ों, तारान्—विशुद्ध यानी असली, तरलगुटिकान् हारान्—मध्यभाग में महारत्नों से युक्त हार, शङ्खशुक्तीः—शङ्ख एवं सीपियों, शष्पश्यामान्—घास की तरह हरे रंग वाली। उन्मयूखप्ररोहान्—अङ्कुरों के समान चमकती हुई किरणों वाली, मरकतमणीन—मरकतमणियों विद्रुमाणां भङ्गान् च—(तथा) मूंगों के टुकड़ों का, दृष्ट्वा—देखकर, सलिलनिधयः—समुद्र, तोयमात्रावशेषाः संलक्ष्यन्ते—केवल जलमात्र धारण करने वाले प्रतीत होते हैं ।

**भाषानुवाद :**

जिस उज्जयिनी में बाजारों में बिक्री के लिए सजाये हुए करोड़ों विशुद्ध यानी असली मध्य भाग में महारत्नों से हरे रंगवाली, अङ्कुरों के समान चमकती हुई किरणों वाली मरकतमणियों तथा मूंगों के टुकड़ों को देखकर समुद्र केवल जलमात्र धारण करने वाले प्रतीत होते हैं ।

**संस्कृत-व्याख्या :**

उज्जयिन्याः विपणीनां रत्नानां प्रचुरतायाः वर्णनं करोति कविकालिदासः पद्येऽस्मिन्—

यस्याम् उज्जयिन्याम्, कोटिशः—अपरिमितान्, विपणिरचितान्—पण्यवीथिकाप्रसारितान्, तारान्—शुद्धान्, तरलगुटिकान्—मध्यमणीभूतमहारत्नान्, हारान्—मुक्तावलीः, शङ्खशुक्तीः—कम्बुमुक्तास्फोटान्, शष्पश्यामान्—बालतृणश्यामलान्, उन्मयूखप्ररोहान्—उद्गतसुन्दराङ्कुरान्, मरकतमणीन्—गारुडरत्नानि, विद्रुमाणाम्—प्रवालानाम्, भङ्गान् च—खण्डान् च, दृष्ट्वा—अवलोक्य, सलिलनिधयः—समुद्राः, तोयमात्रावशेषाः—जलमात्रावशिष्टाः, संलक्ष्यन्ते—दृश्यन्ते ।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ! उज्जयिन्याः विपणिषु अपरिमितान् शुद्धमणिहारान्, शङ्खशुक्तीः बालतृणश्यामलान् प्रवालखण्डान् च अवलोक्य समुद्राः जलमात्रशेषाः सञ्जाताः इति अनुमीयते।

अत्र उदात्तालङ्कारो विद्यते।

टिप्पणी :

कोटिशः—बहुसंख्यक यानी बहुत बड़ी संख्या में। कोटि+शस्। विपणिरचितान्—बाजारों में सजाये गये। विपणिषु रचिताः, तान (सप्तमी तत्पुरुष समास)। शष्पश्यामान्—घास की तरह हरे रंग वाले। शष्पाणि इव श्यामाः तान् (उपमित कर्मधारय समास)। उन्मयूखप्ररोहान्—अङ्कुरों की तरह चमकती हुई किरणें निकल रही हैं जिनमें। उद्गताः मयूखप्ररोहाः येषां ते, तान् (बहुव्रीहि समास)। तोयमात्रावशेषाः—केवल जल अवशिष्ट है जिनमें। तोयम् एव तोयमात्रम् (रूपकसमास) तत् अवशेषो येषां ते (बहुव्रीहि समास)। संलक्ष्यन्ते—दिखाई देते हैं। सम्+लक्ष्+णिच्+लट्+झ।

जालोद्गीर्णैरुपचितवपुः केशसंस्कारधूपै-
बन्धुप्रीत्या भवनशिखिभिर्दत्तनृत्योपहारः।
हर्म्येष्वस्याः कुसुमसुरभिष्वध्वखेदं नयेथाः
लक्ष्मीं पश्यन् ललितवनितापादरागाङ्कितेषु ॥३४॥

अन्वय :

जालोद्गीर्णैः केशसंस्कारधूपैः उपचितवपुः, बन्धुप्रीत्या भवनशिखिभिः दत्तनृत्योपहारः, कुसुमसुरभिषु, ललितवनितापादरागाङ्कितेषु हर्म्येषु अस्याः लक्ष्मीं पश्यन् अध्वखेदं नयेथाः।

शब्दार्थ :

(हे मेघ!), जालोद्गीर्णैः—(खिड़कियों की) जालियों से निकलते हुए, केशसंस्कारधूपैः—(स्त्रियों के) केशों को सुगन्धित करने वाले धूप से, उपचितवपुः—परिपुष्टशरीर वाले, बन्धुप्रीत्या—(तथा) बन्धु-स्नेह के कारण, भवनशिखिभिः—पालतू मयूरों से, दत्तनृत्योपहारः—नृत्य-रूप उपहार प्राप्त करते हुए, कुसुमसुरभिषु—(तुम) फूलों से सुगन्धित, ललितवनितापाद—सुन्दरियों के चरणों के, रागाङ्कितेषु हर्म्येषु—लाक्षा-रस से चिह्नित महलों में, अस्याः लक्ष्मीम्—इस (उज्जयिनी) की शोभा को, पश्यन्—देखते हुए, अध्वखेदं नयेथाः—मार्ग की थकावट को दूर करना।

भाषानुवाद ।

हे मेघ ! खिड़कियों की जालियों से निकलते हुए, स्त्रियों के केशों को सुगन्धित करने वाले धूप से परिपुष्ट शरीर वाले तथा बन्धु-स्नेह के कारण पालतू मयूरों से नृत्य-रूप उपहार प्राप्त करते हुए तुम फूलों से सुगन्धित सुन्दरियों के चरणों के लाक्षा-रस से चिह्नित महलों में इस उज्जयिनी की शोभा को देखते हुए मार्ग की थकावट को दूर करना ।

संस्कृत-व्याख्या :

उज्जयिन्याः धनिकभवनानां शोभायाः वर्णनं करोति कविः पद्येऽस्मिन्—

(हे मेघ !), जालोद्गीर्णैः = गवाक्षमार्गनिर्गतैः, केशसंस्कारधूपैः = शिरोरुहसंस्कृतिधूपैः, ललनाकेशवासनार्थैः गन्धद्रव्यधूपैः इत्यर्थः । उपचितवपुः = परिपुष्टशरीरः, बन्धुप्रीत्या = बान्धवप्रणयेन, भवनशिखिभिः = गेहमयूरैः, दत्तनृत्योपहारः = प्रदत्तनर्त्तनोपानः कुसुमसुरभिषु = पुष्पसुगन्धिषु, ललितवनितापादरागाङ्कितेषु = ललनाचरणलाक्षारसचिह्नितेषु, हर्म्येषु = धनिकभवनेषु, अस्याः = एतस्याः, उज्जयिन्याः इत्यर्थः । लक्ष्मीम्—शोभाम्, पश्यन् = अवलोकयन्, अध्वखेदम् = मार्गश्रमम्, नयेथाः = अपनय ।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ ! गवाक्षमार्गनिर्गतैः ललनाकेशवासनार्थैर्गन्धद्रव्यधूपैः परिपुष्टशरीरः अथ च बन्धुप्रीत्या भवनमयूरैः प्रदत्तनर्तनोपहारः त्वं पुष्पसुगन्धिषु प्रमदाचरणरागाङ्कितेषु धनिकभवनेषु उज्जयिन्याः शोभां विलोकयन् मार्गपरिश्रमं नयेथाः ।"

टिप्पणी :

जालोद्गीर्णैः—खिड़कियों की जालियों से निकले हुए । जालेभ्यः उद्गीर्णाः, तैः (पञ्चमी तत्पुरुष समास) । उद् + गृ + क्त = उद्गीर्णः । केशसंस्कारधूपैः = केशों को सुगन्धित करने के लिए गन्ध-द्रव्यों के धुएं से । केशानां संस्कारस्य धूपैः (षष्ठी तत्पुरुष समास) उपचितवपुः—परिपुष्ट शरीर वाला । उपचितं वपुः यस्य सः (बहुव्रीहि समास) । उप + चि + क्त । भवनशिखिभिः = पालतू मयूरों द्वारा । भवनानां शिखिभिः (षष्ठी तत्पुरुष समास) दत्तनृत्योपहारः—दिया गया है नृत्य-रूपी उपहार जिसको । नृत्यमेव उपहारः (कर्मधारय समास), दत्तः नृत्योपहारः यस्मै (बहुव्रीहि समास) । अध्वखेदम्—मार्ग की थकावट को । अध्वनः खेदः, तम् (षष्ठी तत्पुरुष समास) ।

भर्तुः कण्ठच्छविरिति गणैः सादरं वीक्ष्यमाणः

पुण्यं यायास्त्रिभुवनगुरोर्धाम चण्डीश्वरस्य ।

धूतोद्यानं कुवलयरजोगन्धिभिर्गन्धवत्या-
स्तोयक्रीडानिरतयुवतिस्नानतिक्तैर्मरुद्भिः ॥३५॥

**अन्वय :**

भर्तुः कण्ठच्छविः इति गणैः सादरं वीक्ष्यमाणः (सन्) कुवलयरजोगन्धिभिः तोयक्रीडानिरतयुवतिस्नानतिक्तैः गन्धवत्याः मरुद्भिः धूतोद्यानं त्रिभुवनगुरोः चण्डीश्वरस्य पुण्यं धाम यायाः ।

**शब्दार्थ :**

भर्तुः कण्ठच्छविः—(यह मेघ) स्वामी (शिव) के कण्ठ की तरह (श्यामल) कान्ति वाला है, इति—इस विचार से, गणैः=गणों द्वारा, सादरम्=आदरपूर्वक, वीक्ष्माणः (सन्)=देखे जाते हुए, कुवलयरजोगन्धिभिः=(तुम) कमल-पराग से सुवासित, तोयक्रीडानिरत=(और) जल-क्रीड़ा में रत, युवतिस्नानतिक्तैः—युवतियों के स्नान से सुगन्धित, गन्धवत्याः—गन्धवती नदी के मरुद्भिः—पवन से, धूतोद्यानम्—कम्पित उद्यान वाले, त्रिभुवनगुरोः—त्रिभुवन के स्वामी, चण्डीश्वरस्य—पार्वती-पति शिव के, पुण्यं धाम यायाः—पवित्र स्थान को जाना ।

**भाषानुवाद :**

यह मेघ स्वामी शिव के कण्ठ की तरह श्यामल कान्ति वाला है, इस विचार से गणों द्वारा आदरपूर्वक देखे जाते हुए तुम कमल-पराग से सुवासित और जल क्रीड़ा में रत युवतियों के स्नान से सुगन्धित गन्धवती नदी के पवन से कम्पित उद्यान वाले त्रिभुवन के स्वामी पार्वती-पति शिव के पवित्र स्थान को जाना ।

**संस्कृत-व्याख्या :**

उज्जयिन्याः महाकालमन्दिरस्य वर्णनं करोति महाकविकालिदासः पद्येऽस्मिन्—

(अयं मेघः), भर्तुः—स्वामिनः शिवस्य इत्यर्थः । कण्ठच्छविः—गलकान्तिः-इति—अस्मात् कारणात्, गणैः—प्रमथैः, सादरम्—आदरपूर्वकम्, वीक्ष्यमाणः दृश्यमानः (सन्), कुवलरजोगन्धिभिः—कमलपरागसौरभयुक्तैः, तोयक्रीडानिरत-युवतिस्नानतिक्तैः—जलक्रीडारतललनास्नानसुरभिभिः, गन्धवत्याः—एतन्नाम-नद्याः, मरुद्भिः—पवनैः, धूतोद्यानम्—कम्पितोद्यानम् त्रिभुवनगुरोः—त्रैलोक्य-नायकस्य-चण्डीश्वरस्य—गौरीपतेः, पुण्यम्—पवित्रम्, धाम—स्थानम्, यायाः—गच्छ । कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ !

त्वं शिवकण्ठसमकान्तिको वतंसे। अतः त्वाम् उज्जयिन्यां शिवगणाः सादरं द्रक्ष्यन्ति। त्वं कमलपरागयुक्तैः जलक्रीडानिरतानां प्रमदानां चन्दनादिगन्धद्रव्येणतिक्तैः गन्धवत्याः वायुभिः कम्पितोद्यानं महाकालेश्वरस्य पवित्रं स्थानम् अवश्यमेव गच्छ।"

अत्र उदात्तालङ्कारो विद्यते।

टिप्पणी :

भर्तुः कण्ठच्छविः—शिव के कण्ठ की छवि की तरह है छवि जिसकी। भर्तुः, कण्ठस्य छविः (षष्ठी तत्पुरुष समास) कण्ठच्छविः इव छविः अस्य (बहुव्रीहि समास और उत्तरपदलोप)। वीक्ष्यमाणः—देखा जाता हुआ। वि + ईक्ष् + शानच्। धूतोद्यानम्—कम्पित है उद्यान जहाँ के। धूतानि उद्यानानि यस्मिन् तत् (बहुव्रीहि समास)। युवतिः—युवति। युवन् + ति। यहाँ युवन् शब्द से 'यूनस्तिः' सूत्र से 'ति' प्रत्यय हुआ है।

अप्यन्यस्मिञ्जलधर! महाकालमासाद्य काले
स्थातव्यं ते नयनविषयं यावदत्येति भानुः।
कुर्वन्संध्याबलिपटहतां शूलिनः श्लाघनीया-
मामन्द्राणां फलमविकलं लप्स्यसे गर्जितानाम्॥३६॥

अन्वय :

जलधर! महाकालम् अन्यस्मिन् अपि काले आसाद्य ते (तत्र तावत्) स्थातव्यं यावत् भानुः नयनविषयम् अत्येति। श्लाघनीयां शूलिनः सन्ध्याबलिपटहतां कुर्वन् (त्वम्) आमन्द्राणां गर्जितानाम् अविकलं फलं लप्सस्यसे।

शब्दार्थ :

जलधर = हे मेघ!, महाकालम् = महाकाल (मन्दिर में), अन्यस्मिन् काले अपि = अन्य समय में भी, आसाद्य = पहुँच कर, ते (तत्र तावत्) = तुम्हारे (वहाँ पर तब तक). स्थातव्यम् = ठहरना चाहिए, यावत् = जबतक, भानुः—सूर्य, नयनविषयम् अत्येति = अस्त न हो जाय, शूलिनः (वहाँ) शिव की, श्लाघनीयां सन्ध्या-बलिपटहतां कुर्वन् = सन्ध्याबलि-सन्ध्याकालिक पूजा में, श्लाघनीयां पटहतां कुर्वन्—प्रशंसनीय नगाड़े का काम करते हुए, आमन्द्राणां गर्जितानाम् = (तुम अपने) कुछ गम्भीर गर्जनों का, अविकलं फलम् = पूरा फल, लप्स्यसे = प्राप्त कर लोगे।

**भाषानुवाद :**

हे मेघ ! महाकाल-मन्दिर में अन्य समय में भी पहुँच कर तुम्हें वहाँ पर तब तक ठहरना चाहिए जब तक सूर्य अस्त न हो जाय। वहाँ शिव की सन्ध्या कालिक पूजा में प्रशंसनीय नगाड़े का काम करते हुए तुम अपने कुछ गम्भीर गर्जनों का पूरा फल प्राप्त कर लोगे।

**संस्कृत-व्याख्या :**

'यक्षः मेघं शिवस्य आरत्यां मन्द्र-गर्जनं कर्त्तुं कथयति' इत्यस्य वर्णनं कविः करोति पद्येऽस्मिन्—

जलधर = हे मेघ ! महाकालम् = चण्डीश्वरस्थानम्, अन्यस्मिन् अपि = अपरस्मिन् अपि, काले = समये, आसाद्य = प्राप्य, ते = त्वया, (तत्र = तस्मिन् स्थाने, तावत् = तत्कालपर्यन्तम्) स्थातव्यम् = स्थानीयम्, यावत् = यावता कालेन, भानुः = सूर्यः, नयनविषयम् = नयनपथम् अत्येति = अतिक्रामति। श्लाघनीयाम् = प्रशंसनीयाम्, शूलिनः = शङ्करस्य, सन्ध्या-बलिपटहताम् = सायङ्कालिकपूजाऽऽनकत्वम्, कुर्वन् = कुर्वाणः, (त्वम्), आमन्द्राणाम् = ईषद्गम्भीराणाम्, गर्जितानाम् = स्तनितानाम्, अविकलम् = अखण्डलम्, समस्तम् इत्यर्थः। फलम् = पुण्यम्, लप्स्यसे = प्राप्स्यसि।

कवेः कथनस्य तात्पर्यम इदमस्ति यत् यक्षः मेघं कथयति "हे मेघ ! सन्ध्यातिरिक्ते समये महाकालमन्दिरं गत्वा सन्ध्याकालं यावत् त्वया तत्रैव स्थातव्यम्। सन्ध्यायां शङ्करस्य पूजाकाले पटहतां कुर्वाणः त्वं गम्भीरगर्जितानां समस्तं फलं प्राप्स्यसि।"

अत्र काव्यलिङ्गमलङ्कारो वर्तते।

**टिप्पणी :**

महाकालम्-महाकाल (मन्दिर) को। महाकाल-मन्दिर उज्जैन में स्थित है। महाकाल शिव को कहते हैं। नयनविषयम्—दृष्टिपथ। नयनयोः विषयः, तम् (षष्ठी तत्पुरुष समास)। अत्येति—अतिक्रमण करता है। अति + इण् + लट् + ति। ते = 'स्थातव्यम्', इस कृत्यप्रत्ययान्त पद के योग से 'कृत्यानां कर्तरि वा' सूत्र से षष्ठी विभक्ति हुई है। षष्ठी के वैकल्पिक होने से एक पक्ष में तृतीया विभक्ति भी होती है। युष्मद् और अस्मद् शब्द के 'ते' 'मे' आदि आदेश वाक्य के आदि में नहीं होते हैं। श्लाघनीयाम्-अच्छी या प्रशंसनीय। श्लाघ् + अनीयर (अनीय)। सन्ध्याबलिपटहताम्—सन्ध्याकालिक पूजा में पटहत्व यानी नगाड़ापन। सन्ध्यायां बलिः (सप्तमी तत्पुरुष समास)। पटहस्य भावः पटहता (पटह + तल + टाप्)। सन्ध्याबलेः पटहता, ताम् (षष्ठी तत्पुरुष समास)।

पादन्यासैः क्वणितरशनास्तत्र लीलावधूतं
रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः ।
वेश्यास्त्वत्तो नखपदसुखान्प्राप्य वर्षाग्रबिन्दू-
नामोक्ष्यन्ते त्वयि मधुकरश्रेणिदीर्घान्कटाक्षान् ॥३७॥

अन्वय :

तत्र पादन्यासैः क्वणितरशनाः लीलावधूतैः रत्नच्छायाखचितबलिभिः चामरैः क्लान्तहस्ताः वेश्याः त्वत्तः नखपदसुखान् वर्षाग्रबिन्दून्, प्राप्य त्वयि मधुकर श्रेणिदीर्घान् कटाक्षान् आमोक्ष्यन्ते ।

शब्दार्थ :

तत्र = वहाँ (संध्या के समय), पादन्यासैः = पैरों के रखने से यानी पैरों की चाल से, क्वणित रशनाः—जिनकी करधनियाँ झनझनाती रहती हैं, लीलावधूतैः = विलास से कम्पित, रत्नच्छायाखचितबलिभिः = (एवं) रत्नों की कान्ति से विभूषित दण्ड वाले, चामरैः क्लान्तहस्ताः = चामरों को लेने से जिनके हाथ थक गये हैं (ऐसी), वेश्याः = वेश्याएँ, त्वत्तः = तुम से, नखपदसुखान् = नख-क्षत अङ्गों को सुख देने वाली, वर्षाग्रबिन्दून्—वर्षा की पहली बून्दों को, प्राप्य —प्राप्त कर, त्वयि = तुम पर, मधुकरश्रेणिदीर्घान् = भ्रमर-पङ्क्ति की तरह लम्बे, कटाक्षान् आमोक्ष्यन्ते = कटाक्षों को छोड़ेंगी ।

भाषानुवाद :

वहाँ संध्या के समय पैरों के रखने से यानी पैरों की चाल से जिनकी कर-धनियाँ झनझनाती रहती हैं विलास से कम्पित एवं रत्नों की कान्ति से विभू-षित दण्ड वाले चामरों को लेने से जिनके हाथ थक गये हैं ऐसी वेश्याएँ तुम से नखक्षत अङ्गों को सुख देने वाली वर्षा की पहली बून्दों को प्राप्त कर तुम पर भ्रमर-पङ्क्ति की तरह लम्बे कटाक्षों को छोड़ेंगी ।

संस्कृत-व्याख्या :

महाकालमन्दिरे वेश्यानृत्य-वर्णनं करोति कविः पद्येऽस्मिन्—

यत्र = सन्ध्याकाले, पादन्यासैः = चरणनिक्षेपैः, क्वणित-रशनाः = शब्दित-मेखलाः, लीलावधूतैः—विलासकम्पितैः रत्नच्छायाखचितबलिभिः—कङ्कणमणि-कान्तिरूषितदण्डैः, चामरैः = प्रकीर्णकैः क्लान्तहस्ताः—खिन्नकराः, वेश्याः—गणिकाः त्वत्तः—भवतः, नखपदसुखान्—नखक्षतसुखकरान् वर्षाग्रबिन्दून्—वृष्टिप्रथमबिन्दून्, प्राप्य —आप्त्वा, त्वयि — भवति. मधुकर श्रेणिदीर्घान् —
भ्रमरपङ्क्तिदीर्घान्, कटाक्षान् — [illegible]

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ ! उज्जयिन्यां सन्ध्याकाले महाकालनाथम् आप्त्वा नर्त्तनं कुर्वाणाः वेश्याः भवतः नखक्षतस्थानेषु सुखजनकान् वृष्टेः प्रथमबिन्दून् अनुभूय भवन्तं कटाक्षयुक्तं निरीक्षिष्यन्ते ।"

अत्र लुप्तोपमाऽलङ्कारः अस्ति ।

**टिप्पणी :**

पादन्यासैः—पैरों के रखने से । पादयोः न्यासाः, तैः (षष्ठी तत्पुरुष समास) । क्वणितरशनाः—शब्द कर रही हैं, करधनियां जिनकी । क्वणिताः रशनाः यासाम्, ताः (बहुव्रीहि समास) । लीलावधूतैः—विलासपूर्वक हिलाये जाने वाले । लीलया अवधूतैः (तृतीया तत्पुरुष समास) । क्लान्तहस्ताः—थक गये हैं हाथ जिनके । क्लान्तौ हस्तौ यासाम्, ताः (बहुव्रीहि समास) । मधुकर-श्रेणि-दीर्घान्-भ्रमरपङ्क्ति की तरह बड़े । मधुकराणां श्रेण्यः (षष्ठी तत्पुरुष समास), तद्वत् दीर्घाः तान् (उपमित समास) ।

पश्चादुच्चैर्भुजतरुवनं मण्डलेनाभिलीनः
सांध्यं तेजः प्रतिनवजपापुष्परक्तं दधानः ।
नृत्तारम्भे हर पशुपतेरार्द्रनागाजिनेच्छां
शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्या ॥३८॥

**अन्वय :**

पश्चात् पशुपतेः नृत्तारम्भे प्रतिनवजपापुष्परक्तं सान्ध्यं तेजः दधानः उच्चैः भुजतरुवनं मण्डलेन अभिलीनः भवान्या शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिः आर्द्रनागाजिनेच्छां हर ।

**शब्दार्थ :**

पश्चात् = इसके बाद यानी संध्या की पूजा के बाद, पशुपतेः = शिव के, नृत्यारम्भे = ताण्डवनृत्य के प्रारम्भ में, प्रतिनवजपापुष्परक्तम् = ताजे जपा-पुष्प की तरह लाल यानी ताजे अड़हुल फूल की तरह लाल, सान्ध्यं तेजः दधानः = सायंकालिक तेज को धारण किये हुए, उच्चैः भुजतरुवनम् = (तुम शिव की) ऊंची भुजा-रूपी वृक्षों के वन में, मण्डलेन अभिलीनः = मण्डलाकार व्याप्त होकर, भवान्या = (एवं) पार्वती द्वारा, शान्तोद्वेगः = भय से रहित, स्तिमितनयनम् = (तथा) निश्चल नेत्रों से, दृष्टभक्तिः = देखी गयी भक्ति वाले बनकर, आर्द्रनागाजिनेच्छां हर = (शिव की) हाथी के रक्त से आर्द्र चर्म को (धारण करने की) इच्छा दूर करना अर्थात् स्वयं चर्म का काम देना ।

**भाषानुवाद:**

इसके बाद यानी सांझ की पूजा के बाद शिव के ताण्डवनृत्य के प्रारम्भ में ताजे जपापुष्प की तरह लाल यानी ताजे अड़हुल फूल की तरह लाल सायंकालिक तेज को धारण किये हुए तुम शिव की ऊंची भुजा-रूपी वृक्ष के वन में मण्डलाकार व्याप्त होकर एवं पार्वती द्वारा भय से रहित तथा निश्चल नेत्रों से देखी गयी भक्ति वाले बनकर शिव की, हाथी के रक्त से आर्द्र चर्म को धारण करने की इच्छा दूर करना अर्थात् स्वयं चर्म का काम देना।

**संस्कृत-व्याख्या :**

'यक्षः मेघं शिवस्य ताण्डवनृत्ये सहायतां कर्तुं कथयति' इत्यस्य वर्णनं कविः करोति पद्येऽस्मिन्—

पश्चात् = सन्ध्यापूजानन्तरम्, पशुपतेः = शिवस्य, नृत्तारम्भे = ताण्डवोपक्रमे, प्रतिनवजपापुष्परक्तम् = नवीनजपाकुसुमारुणम्, सान्ध्यम् = सायङ्कालिकम्, तेजः = प्रकाशम्, दधानः = धारयन्, उच्चः = उन्नतम्, भुजतरुवनम् = बाहुवृक्षकाननम्, मण्डलेन—मण्डलाकारेण, अभिलीनः = अभिव्याप्तः, भवान्या—भवपत्न्या, पार्वत्या इत्यर्थः। शान्तोद्वेगस्तिमितनयनम् = व्यतीतभय-निश्चलनत्रम्, दृष्टभक्तिः = विलोकित पूज्यानुरागः आर्द्रनागाजिनेच्छाम् = रक्तक्लिन्नगजचर्माभिलाषम्, हर = निवर्तय।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ! त्वं सन्ध्यापूजानन्तरं शिवताण्डवकाले सान्ध्य तेजः धारयन् शिवस्य उन्नतं बाहुवृक्षकाननं मण्डलाकारेण व्याप्य शिवस्य रक्तक्लिन्नगजचर्माभिलाषं हर, तस्मिन् काले पार्वती गजासुरचर्मदर्शनभयस्य अपनयेन तव भक्ति द्रक्ष्यति।"

अत्र संसृष्टिरलङ्कारो विद्यते।

**टिप्पणी :**

पशुपतेः—शिव के। पशूनां पतिः, तस्य (षष्ठी तत्पुरुष समास)। नृत्यारम्भे—ताण्डवनृत्य के आरम्भ में। नृत्यस्य आरम्भः, तस्मिन् (षष्ठी तत्पुरुष समास)। प्रतिनवजपापुष्परक्तम्—ताजे जपापुष्प की तरह लाल। प्रतिनवं च तत् जपापुष्पम् (कर्मधारय समास)। तदिव रक्तम् (उपमित समास)। अभिलीनः = व्याप्त। अभि + ली + क्त (त) दृष्टभक्तिः—देखी गयी है भक्ति जिसकी। दृष्ट भक्तिः यस्य, सः (बहुव्रीहि समास)। यहाँ सामान्ये 'नपुंसकम्' सूत्र से दृष्टपद में नपुंसकता हुई है।

गच्छन्तीनां रमणवसतिं योषितां तत्र नक्तं
रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः ।
सौदामन्या कनकनिकषस्निग्धया दर्शयोर्वीं
तोयोत्सर्गस्तनितमुखरो मा च भूर्विक्लवास्ताः ॥३६॥

**अन्वय :**

तत्र नक्तं रमणवसतिं गच्छन्तीनां योषितां सूचिभेद्यैः तमोभिः रुद्धालोके नरपतिपथे कनकनिकषस्निग्धया सौदामन्या उर्वीं दर्शय, तोयोत्सर्गस्तनित-मुखरः च मा स्म भूः (यतः) ताः विक्लवाः ।

**शब्दार्थ :**

तत्र—वहाँ (उज्जयिनी में), नक्तम् = (तुम), रात्रि में, रमणवसतिं गच्छन्तीः-नाम्—प्रेमियों के घरों को जाती हुई, योषिताम्—स्त्रियों को सचिभेद्यैः तमोभिः—घने अन्धकार से, रुद्धालोके नरपतिपथे—न दीख पड़ने वाले राज-मार्ग में, कनक-निकषस्निग्धया—कसौटी पर सुवर्णरेखा की तरह चमकने वाली, सौदामन्या—बिजली द्वारा, उर्वीं दर्शय—पृथिवी यानी मार्ग दिख-लाना तोयोत्सर्ग-स्तनितमुखरः च—और बरसने एवं गरजने का शब्द, मा स्म भूः—न करना, (यतः—क्योंकि), ताः विक्लवाः—वे डरपोक (होती हैं) ।

**भाषानुवाद :**

वहाँ (उज्जयिनी में) तुम रात्रि में प्रेमियों के घरों को जाती हुई स्त्रियों को, घने अन्धकार से न दीख पड़ने वाले मार्ग में, कसौटी पर सुवर्णरेखा की तरह चमकने वाली बिजली द्वारा पृथिवी यानी मार्ग दिखाना और बरसने एवं गरजने का शब्द न करना, क्योंकि वे डरपोक होती हैं ।

**संस्कृत-व्याख्या :**

विद्युत्-प्रकाशेन अभिसारिकाणां मार्गदर्शनस्य वर्णनं करोति कविः कालि-दासः पद्येऽस्मिन्—

तत्र—उज्जयिन्याम्, नक्तम—रात्रौ, रमणवसतिम्—प्रियभवनम्, गच्छ-न्तीनाम्, व्रजन्तीनाम् योषिताम्—नारीणाम् सचिभेद्यैः—सूचिभेदनीयैः, तमोभिः—अन्धकारैः, रुद्धालोके—अवरुद्धालोके, नरपतिपथे—राजमार्गे, कनकनि-कषस्निग्धया सुवर्णशाणरेखातेजसा, सौदामन्या—विद्युता, उर्वीम्—वसुधाम्, दर्शय—अवलोकय, तोयोत्सर्गस्तनितमुखरः च—वृष्टिगर्जितशब्दायमानः च, मा स्म भूः—नो भव, (यतः—यतो हि), ताः—अमूः योषितः इत्यर्थः । विक्लवाः—विह्वलाः ।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ ! त्वम् उज्जयिन्यां निशायां निबिडे अन्धकारे प्रियभवनं यान्तीनाम् अभिसारिकाणां विद्युत्प्रकाशेन मार्गम् आलोकय। ताः अभिसारिकाः भीरवः भवन्ति। अतः त्वया तस्मिन् काले गर्जनं नैव करणीयम्।"

अत्र संसृष्टिरलङ्कारो विद्यते।

**टिप्पणी :**

रमणवसतिम्—प्रेमियों के घरों को। रमणस्य वसतिः, ताम् (षष्ठी तत्पुरुष समास)।

अभिसारिका—प्रेमी के संकेतानुसार किसी पूर्व निश्चित स्थान पर विहार करने वाली स्त्री को 'अभिसारिका' कहते हैं।

सूचिभेद्यैः—सुई द्वारा भेद करने योग्य (अर्थात् घना)। सूच्या भेद्यानि, तैः (तृतीया तत्पुरुष समास)। रुद्धालोके—आंखों से दिखाई देना जहां बन्द हो गया है। रुद्धः आलोकः यस्मिन् तस्मिन् (बहुव्रीहि समास)। तोयोत्सर्गस्तनितमुखरः—वर्षा तथा गर्जन से शब्दायमान। तोयस्य उत्सर्गः (षष्ठी तत्पुरुष समास), तोयोत्सर्गश्च स्तनितश्च तोयोत्सर्गस्तनिते (द्वन्द्व समास), ताभ्यां मुखरः (तृतीया तत्पुरुष समास)। विक्लवाः—डरपोक। वि + क्लु (जाना) + अच्।

**तां कस्याञ्चिद्भवनवलभौ सुप्तपारावतायां**
**नीत्वा रात्रिं चिरविलसनात्खिन्नविद्युत्कलत्रः।**
**दृष्टे सूर्ये पुनरपि भवान् वाहयेदध्वशेषं**
**मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः ॥४०॥**

**अन्वय :**

चिरविलसनात् खिन्नविद्युत्कलत्रः भवान् सुप्तपारावतायां कस्याञ्चित् भवनवलभौ तां रात्रिं नीत्वा सूर्ये दृष्टे (सति) पुनरपि अध्वशेषं वाहयेत्। (तथाहि) सुहृदाम् अभ्युपेतार्थकृत्याः न खलु मन्दायन्ते।

**शब्दार्थ :**

चिरविलसनात्—देर तक चमकते रहने के कारण, खिन्नविद्युत्कलत्रः—थकी हुई बिजली-रूप पत्नी वाले, भवान्—आप (तुम), सुप्तपारावतायाम्—सोये हुए कबूतरों से युक्त, कस्याञ्चित् भवनवलभौ—किसी घर की छत पर, तां रात्रिं नीत्वा—उस रात को बिताकर, सूर्ये दृष्टे (सति)—सूर्य के दिखाई देने पर अर्थात् सूर्योदय होने पर, पुनरपि—फिर से, अध्वशेषं वाहयेत्—शेष

मार्ग को पार करना, (तथाहि—क्योंकि), सुहृदाम् अभ्युपेतार्थकृत्याः—मित्रों के प्रयोजन की बात को स्वीकार करने वाले, न खलु मन्दायन्ते—(व्यक्ति) निश्चय कभी देर नहीं करते।

**भाषानुवाद :**

देर तक चमकते रहने के कारण थकी हुई बिजली-रूप पत्नी वाले तुम सोये हुए कबूतरों से युक्त किसी घर की छत पर उस रात को बिताकर सूर्य के दिखाई देने पर यानी सूर्योदय होने पर फिर से शेष मार्ग को पार करना, क्योंकि मित्रों के प्रयोजन की बात को स्वीकार करने वाले व्यक्ति निश्चय कभी देर नहीं करते।

**संस्कृत-व्याख्या :**

मेघस्य उज्जयिन्यां रात्रि-यापनस्य एवं प्रातःकाले शीघ्रं गमनस्य वर्णनं करोति कविकालिदासः पद्येऽस्मिन्—

चिरविलसनात्—बहुकालस्फुरणात्, खिन्न-विद्युत्कलत्रः—क्लान्तसौदामनी-भार्यः, भवान्—त्वम्, सुप्तपारावतायाम्—प्रसुप्तकपोतायाम्, कस्याञ्चित्—कुत्रचित भवनवलभी—गेहाच्छादनो-परिभागे, ताम्—अमूम्, रात्रिम्—निशाम्, नीत्वा—यापयित्वा, सूर्ये—दिनकरे, दृष्टे (सति)—अवलोकिते (सति), पुनरपि—भूयोऽपि, अध्वशेषम्—मार्गशेषम्, वाहयेत्—प्राप्नुयात्, (तथाहि—यतोहि), सुहृदाम्—मित्राणाम्, अभ्युपेतार्थकृत्याः—स्वीकृत प्रयोजनकार्याः, न—नहि, खलु—निश्चयेन, मन्दायन्ते—मन्दाः भवन्ति।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ! उज्जयिन्यां बहुकालस्फुरणात् तव प्रिया तडित्-क्लान्ता भविष्यति। अतः त्वया निशायां कस्मिंश्चित् गृहाच्छादनोपरिभागे स्थातव्यम्। पुनरपि प्रातः काले त्वया अलकां प्रति प्रस्थानं करणीयम्। मित्राणां कार्यं स्वीकृत्य जनाः न खलु विलम्बन्ते। अतः त्वया शीघ्रमेव गमनीयम्।"

अत्र सङ्करालङ्कारो वर्तते।

**टिप्पणी :**

चिरविलसनात्—बहुत देर तक चमकने से। चिरं विलसनम्, तस्मात् (सुप्सुपा समास)। हेतौ पञ्चमी। वि + लस् + ल्युट् (अन)—विलसनम्। खिन्नविद्युत्कलत्रः—थक गयी है बिजली-रूप स्त्री जिसकी। विद्युदेव कलत्रम् (कर्मधारय समास), खिन्नं विद्युत्कलत्रम् अस्य (बहुव्रीहि समास)। सुप्तपारावतायाम्—सो गये हों कबूतर जहाँ पर। सुप्ताः पारावताः यस्याम् तस्याम्

(बहुव्रीहि समास)। भवनवलभौ—घर की छत पर। भवनस्य वलभिः, तस्याम् (षष्ठी तत्पुरुषसमास)। दृष्टे सूर्ये—सूर्य के दर्शन होने पर यानी सुबह होने पर। दृष्टे—दृश् + क्त (त)। यहाँ 'यस्य च भावेन भावलक्षणम्' सूत्र से सप्तमी विभक्ति हुई है।

तस्मिन्काले नयनसलिलं योषितां खण्डितानां
शान्तिं नेयं प्रणयिभिरतो वर्त्म भानोस्त्यजाशु।
प्रालेयास्रं कमलवदनात्सोऽपि हर्तुं नलिन्याः।
प्रत्यावृत्तस्त्वयि कररुधि स्यादनल्पाभ्यसूयः ॥४१॥

अन्वय :

तस्मिन् काले प्रणयिभिः खण्डितानां योषितां नयनसलिलं शान्तिं नेयम् (अतः) भानोः वर्त्म आशु त्यज। सः अपि नलिन्याः कमलवदनात् प्रालेयास्रं हर्तुं प्रत्यावृत्तः (सन्) त्वयि कर-रुधि (सति) अनल्पाभ्यसूयः स्यात्।

शब्दार्थ :

तस्मिन् काले—उस (सूर्योदय के) समय, प्रणयिभिः—प्रेमियों को, खण्डितानां योषिताम्—खण्डिता नायिकाओं के, नयनसलिलम्—आँसू को, शान्तिं नेयम्—शान्त करता है। अतः—इसलिए, भानोः—(तुम) सूर्य के, वर्त्म—मार्ग को, आशु—शीघ्र, त्यज—छोड़ देना, सः अपि—वह (सूर्य) भी, नलिन्याः—कमलिनी के, कमलवदनात्—कमल-रूप मुख से, प्रालेयास्रं हर्तुम्—ओस-रूप आँसू को दूर करने के लिए यानी पोंछने के लिए, प्रत्यावृत्तः (सन्)—लौटेगा, त्वयि—(उस समय) तुम से, कर-रुधि (सति)—किरण-रूप हाथ के यानी विघ्न डालने पर, अनल्पाभ्यसूयः स्यात्—(वह) अधिक ईर्ष्या वाला हो जायेगा।

भाषानुवाद :

उस (सूर्योदय के) समय प्रेमियों को खण्डिता नायिकाओं के आँसू को शान्त करना है। इसलिए तुम सूर्य के मार्ग को शीघ्र छोड़ देना। वह सूर्य भी कमलिनी के कमल-रूप मुख से ओस-रूप आँसू को दूर करने के लिए यानी पोंछने के लिए लौटेगा। उस समय तुम से किरण-रूप हाथ के रोके जाने पर यानी विघ्न डालने पर (वह) अधिक ईर्ष्या वाला हो जायेगा।

संस्कृत-व्याख्या :

'यक्षः मेघं स्वदेशस्य मार्गं त्यक्तुं कथयति' इत्यस्य वर्णनं कविः करोति पद्येऽस्मिन्—

तस्मिन्—अमुष्मिन्, काले—समये, सूर्योदयकाले इत्यर्थः। प्रणयिभिः—वल्लभैः, खण्डितानां योषिताम्—नायिकाविशेषाणाम्, नयनसलिलम्—अश्रु, शान्तिम्—शमम्, नेयम्—नेतव्यम्, (अतः) भानोः—सूर्यस्य, वर्त्म—मार्गम् आशु—शीघ्रम्, त्यज—परित्यज, सः अपि—असौ अपि, सूर्योऽपि इत्यर्थः। नलिन्याः—पद्मिन्याः, कमलवदनात्—पद्ममुखात्, प्रालेयास्त्रम्—हिमरूपम् अश्रु, हर्तुम्—शमयितुम्, प्रत्यावृत्तः (सन्)—प्रत्यागतः (सन्), तत्र्यपि—भवति, कररुधि (सति)—किरणरोधके (सति), अनल्पाभ्यसूयः—अधिकेर्ष्यः, स्यात्—भवेत्।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ! सूर्योदयकाले त्वया सूर्यावरोधः न करणीयः यतोहि सूर्यम् अवलोक्य प्रियतमाः खण्डितानां नयिकानाम् अश्रु शान्तिं नयन्ति। प्रातःकाले सूर्यः अपि स्वनायिकायाः कमलिन्याः पद्ममुखात् हिमरूपम् अश्रु निवारयितुम् आगच्छति। अतः यदि त्वं तस्य सूर्यस्य कररोधको भविष्यसि तदा सः अतीव कुपितो भविष्यति।"

अत्र सङ्करालङ्कारो वर्तते।

**टिप्पणी :**

प्रणयिभिः—प्रेमियों द्वारा। प्रणय+इनिः। खण्डितानां योषिताम्—खण्डिता स्त्रियों के। खण्ड्+क्त (त) अपने पति को दूसरी स्त्री से सहवास किया हुआ समझ कर कुपित हुई स्त्री को खण्डिता कहते हैं। नयनसलिलम्—आँसू। नयनयोः सलिलम् (षष्ठी तत्पुरुष समास)। कमलवदनात्-कमल-रूपी मुख से। कमलमेव वदन तस्मात् (कर्मधारय समास)। प्रालेयास्त्रम्—ओस-रूपी आँसू को। प्रालेयमेव अस्त्रम्, तत् (कर्मधारय समास)। अनल्पाभ्यसूयः—अधिक ईर्ष्या वाला। न अल्पा अनल्पा (नञ् समास)। अनल्पा अभ्यसूया यस्य सः (बहुब्रीहि समास)।

गम्भीरायाः पयसि सरितश्चेतसीव प्रसन्ने
छायात्माऽपि प्रकृतिसुभगो लप्स्यते ते प्रवेशम्।
तस्मादस्याः कुमुदविशदान्यर्हसि त्वं न धैर्या-
न्मोघीकर्तुं चटुलशफरोद्वर्तनप्रेक्षितानि ॥४२॥

**अन्वय :**

गम्भीरायाः सरितः प्रसन्ने चेतसि इव (प्रसन्ने) पयसि प्रकृतिसुभगः ते छायात्मा अपि प्रवेश लप्स्यते, तस्मात् अस्याः कुमुदविशदानि चटुलशफरोद्वर्त्तन प्रेक्षितानि धैर्यात् मोघीकर्तुं न अर्हसि।

**शब्दार्थ :**

(हे मेघ !), गम्भीरायाः सरितः—गम्भीरा नदी के, चेतसि इव प्रसन्ने पयसि—प्रसन्न चित्त-रूप निर्मल जल में, प्रकृतिसुभगः—स्वभाव से सुन्दर, ते—तुम्हारी, छायात्मा अपि—छाया-रूपी आत्मा भी, प्रवेशं लप्स्यते—प्रवेश को प्राप्त करेगी, तस्मात्—अतः, अस्याः—इस (नदी) की, कुमुद-विशदानि—कुमुद के समान उजली, चटुलशफरोद्वर्तनप्रेक्षितानि—उद्वर्तन—(और) उछलती हुई, शफर-मछली-सी, चटुलप्रेक्षितानि-चञ्चलचित्तवनों को, धैर्यात्—(तुम) धैर्य से, मोघी कर्तुं न अर्हसि—निष्फल करने योग्य नहीं हो।

**भाषानुवाद :**

हे मेघ ! गम्भीरा नदी के प्रसन्नचित्त-रूप निर्मल जल में स्वभाव से सुन्दर तुम्हारी छाया-रूपी आत्मा भी प्रवेश को प्राप्त करेगी। अतः तुम इस नदी की कुमुद के समान उजली और उछलती हुई मछली-सी चञ्चल चितवनों को तुम धैर्य से निष्फल करने योग्य नहीं हो।

**संस्कृत-व्याख्या :**

'यक्षः मेघं गम्भीरानद्याः रक्षोपभोगं कर्तुं कथयति' इत्यस्य वर्णनं कविः करोति पद्येऽस्मिन्—

(हे मेघ !)' गम्भीरायाः=तन्नाम्न्याः, सरितः=नद्याः, प्रसन्ने=अतिनिर्मले, चेतसि=मनसि, इव=यथा, (प्रसन्ने=अतिनिर्मले), पयसि=जले, प्रकृतिसुभगः=स्वभावसुन्दरः, ते=तव, छायात्मा अपि=प्रतिबिम्बशरीरम् अपि, प्रवेशम्=निवेशम्, लप्स्यते=प्राप्स्यति, तस्मात्=कारणात्, अस्याः=एतस्याः, गम्भीरायाः इत्यर्थः। कुमुदविशदानि=कैरवधवलानि, चटुलशफरोद्वर्तनप्रेक्षितानि=चञ्चलमीनोल्लुण्ठनावलोकनानि, धैर्यात्=धीरत्वात् मोघीकर्तुम्=निष्फलीकर्तुम्, न=नहि, अर्हसि=योग्योऽसि।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ ! गम्भीरानद्याः मनसि इव निर्मले जले तव बिम्बशरीरम् अपि प्रवेशं प्राप्स्यति। तस्याः गम्भीरायाः नद्याः कैरवधवलानि चञ्चलमीनोल्लुण्ठनावलोकनानि त्वं धैर्यम् आश्रित्य मोघीकर्तुं न अर्हसि। कथनस्य भावोऽयं वर्तते यत् त्वयि अनुरक्तायाः तस्याः नद्याः स्नेहः त्वया अवश्यमेव अङ्गीकरणीयः।"

अत्र सङ्करालङ्कारो वर्तते।

**टिप्पणी :**

गम्भीरायाः—एक गम्भीरा नाम की नदी का। यह गम्भीरा मालव देश में

बहने वाली छोटी नदी का नाम है। प्रकृतिसुभगः—स्वभाव से सुन्दर। प्रकृत्या सुभगः (तृतीया तत्पुरुष समास)। कुमुदविशदानि = कमलों के समान श्वेत। कुमुदानि इव विशदानि, तानि (कर्मधारय समास)। चटुलशफरोद्वर्तनप्रेक्षितानि—मछलियों की फुर्तीली उछलन-रूप चितवनों को। शफराणाम् उद्वर्तनानि (षष्ठी तत्पुरुष समास)। उद् + वृत् + ल्युट् (अन) = उद्वर्तनानि। चटुलानि च तानि शफरोद्वर्तनानि (कर्मधारयसमास)। मोघीकर्तुम्—विफल करने के लिए। मोघ + च्वि + कृ + तुमुन् (तुम्)।

तस्याः किञ्चित्करधृतमिव प्राप्तवानीरशाखं
नीत्वा नीलं सलिलवसनं मुक्तरोधोनितम्बम्।
प्रस्थानं ते कथमपि सखे! लम्बमानस्य भावि
ज्ञातास्वादो विवृतजघनां को विहातुं समर्थः ॥४३॥

**अन्वय :**

सखे! प्राप्तवानीरशाखं किञ्चित् करधृतमिव मुक्तरोधोनितम्बं नीलं सलिलवसनं हृत्वा लम्बमानस्य ते प्रस्थानं कथमपि भावि। ज्ञात्वास्वादः कः विवृतजघनां विहातुं समर्थः?

**शब्दार्थ :**

सखे = हे मित्र! प्राप्तवानीरशाखम् = बेंत की शाखाओं तक पहुँचे हुए किञ्चित् करधृतम् इव = (अतएव) हाथ से कुछ पकड़े गये हुए के समान, मुक्तरोधोनितम्बम् = (तथा) तट-रूप नितम्बों से सरके हुए, तस्याः = उस गम्भीरा नदी के, नीलं सलिल-वसनं हृत्वा = नीले रंग वाले जल-रूपी वस्त्र को हटा कर, लम्बमानस्य = (उसके ऊपर) पसरे हुए, ते प्रस्थानम् = तुम्हारा प्रस्थान करना, कथमपि भावि = बड़ा कठिन होगा, ज्ञातास्वादः = स्वाद-प्राप्त, कः = कौन (व्यक्ति), विवृतजघनाम् = उघड़ी जांघ वाली (स्त्री) को, विहातुं समर्थः = छोड़ सकता है?

**भावानुवाद :**

हे मित्र! बेंत की शाखाओं तक पहुँचे हुए (अतएव) हाथ से कुछ पकड़े गये हुए के समान तथा तट-रूप नितम्बों से सरके हुए उस गम्भीरा नदी के नीले रंग वाले जल-रूपी वस्त्र को हटा कर उसके ऊपर पसरे हुए तुम्हारा प्रस्थान करना बड़ा कठिन होगा। स्वाद-प्राप्त कौन व्यक्ति उघड़ी जांघ वाली स्त्री को छोड़ सकता है?

**संस्कृत-व्याख्या :**

विवृतजघनायाः नायिकायाः सम: गम्भीराख्याः पार्श्वे मेघावरोधनस्य सम्भावनायाः वर्णनं करोति कविः पद्येऽस्मिन्—

सखे = हे मित्र ! प्राप्तवानीरशाखम् = आप्तवेतसविटपम्, किञ्चित् = ईषत् करधृतम् = हस्तावलम्बितम्, इव = यथा, मुक्तरोधोनितम्बम् = परित्यक्तटकटि, नीलम् = श्यामवर्णम्, तस्याः = अमुष्याः, गम्भीराख्याः इत्यर्थः। सलिलवसनम् = जलवस्त्रम्, हृत्वा = अपनीय, लम्बमानस्य = अवस्रंसमानस्य, ते = तव, प्रस्थानम् = प्रयाणम्, कथमपि = केनापि प्रकारेण, भावि = भविष्यति इति भावः। ज्ञातास्वादः = अनुभूतरसः, कः = जनः, विवृतजघनाम्—प्रकटितकटिपूर्वभागाम्, विहातुम्—परित्यक्तुम्, समर्थः—शक्तः ?

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मित्र ! त्वं पथि गम्भीराख्यां स्वप्रियां ( नदीं) प्राप्स्यसि। प्राप्तवानीरशाखं तस्याः गम्भीरायाः नीलवर्णं जलं हस्तधृतं नीलवर्णं वस्त्रम् इव परिलक्ष्यते। तस्याः नद्याः तटकटिभागात् दूरीभूतम् अस्ति। तत् जलवस्त्रं हृत्वा त्वं तस्याः पार्श्वे स्थास्यसि, यतो हि कोऽपि ज्ञातास्वादः जनः विवृतजघनां प्रमदां परित्यक्तुं समर्थो न भवति।"

अत्र सङ्करालङ्कारो वर्तते।

**टिप्पणी :**

करधृतम्—हाथों के द्वारा पकड़ा हुआ। कराभ्यां धृतम्, तत् (तृतीया तत्पुरुष समास)। मुक्तरोधोनितम्बम् = छोड़ दिया है तट-रूप नितम्ब (कमर या चूतड़) को जिसने उसे। रोधः एव नितम्बः (कर्मधारयसमास), मुक्तः रोधोनितम्बः येन तत् (बहुव्रीहिसमास) सलिलवस्त्रम्—जल-रूपी वस्त्र। सलिलमेव वसनम् (कर्मधारयसमास)।

त्वन्निष्यन्दोच्छ्वसितवसुधागन्धसंपर्करम्यः
स्रोतोरन्ध्रध्वनितसुभगं दन्तिभिः पीयमानः।
नीचैर्वास्यत्युपजिगमिषोर्देवपूर्वं गिरिं ते
शीतो वायुः परिणमयिता काननोदुम्बराणाम् ॥४४॥

**अन्वय :**

त्वन्निष्यन्दोच्छ्वसितवसुधागन्धसम्पर्करम्यः दन्तिभिः स्रोतोरन्ध्रध्वनितसुभगं पीयमानः काननोदुम्बराणां परिणमयिता शीतः वायुः देवपूर्वं गिरिम् उपजिगमिषोः ते नीचैः वास्यति।

**शब्दार्थ :**

त्वन्निष्यन्दोच्छ्वसित = त्वत् तुम्हारे, निष्यन्द – बरसने से, उच्छ्वसित— उभरी हुई, वसुधागन्धसम्पर्करम्यः = पृथिवी की गन्ध के सम्पर्क से रमणीय, दन्तिभिः = हाथियों द्वारा, स्रोतोरन्ध्रध्वनितसुभगम् = सूंडों के छिद्रों की ध्वनि से सुन्दरतापूर्वक, पीयमानः = पिया जाने वाला, काननोदुम्बराणां परिणमयिता = जंगली गूलरों को पकाने वाला, शीतः वायुः = शीतल पवन, देवपूर्वं गिरिम् उपजिगमिषोः = देवगिरि जाने की इच्छा रखने वाले, ते = तुम्हारे, नीचैः वास्यति = नीचे बहेगा।

**भावानुवाद :**

तुम्हारे बरसने से उभरी हुई पृथिवी की गन्ध के सम्पर्क से रमणीय हाथियों द्वारा सूंडों के छिद्रों की ध्वनि से सुन्दरतापूर्वक पिया जाने वाला, जंगली गूलरों को पकाने वाला शीतल पवन देवगिरि जाने की इच्छा रखने वाले तुम्हारे नीचे बहेगा।

**संस्कृत-व्याख्या :**

कविः मेघस्य देवगिरिगमनस्य वर्णनं करोति पद्येऽस्मिन्—

त्वन्निष्यन्दोच्छ्वसितवसुधागन्धसंपर्करम्यः—त्वदवृष्ट्युपबृंहितभूमिगन्धसम्बन्धसुरभिः, दन्तिभिः—हस्तिभिः, स्रोतोरन्ध्रध्वनितसुभगम्—नासाग्रकुहरशब्दसुन्दरम्, पीयमानः – पिबन्, काननोदुम्बराणाम्—वनजन्तुफलानाम्, परिणमयिता—परिपाकयिता, शीतः—शीतलः, वायुः – पवनः, देवपूर्वं गिरिम्—देवशब्दपूर्वकं गिरिम्, देवगिरिम् इति भावः। उपजिगमिषोः—उपगन्तुमिच्छोः, ते—तव, नीचैः—शनैः, वास्यति – गमिष्यति, त्वां वीजयिष्यति इत्यर्थः।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ ! देवगिरिम् उपजिगमिषोः ते वृष्ट्युपबृंहितवसुधासौरभयुक्तः हस्तिभिः नासिकाग्र शब्दपूर्वकं जिघ्रन् काननोदुम्बराणां परिपाकयिता शीतः पवनः त्वां वीजयिष्यति।"

**टिप्पणी :**

त्वन्निष्यन्दोच्छ्वसितवसुधागन्धसम्पर्करम्यः—तुम्हारी वर्षा से फूली हुई पृथिवी की गन्ध सम्पर्क से रमणीय यानी सुगन्धित। तव निष्यन्दः (षष्ठी तत्पुरुष समास), तेन उच्छ्वसिता (तृतीया तत्पुरुष समास), तादृशी वसुधा (कर्मधारय समास), तस्याः गन्धः (षष्ठी तत्पुरुष समास), तस्य सम्पर्कः (षष्ठी तत्पुरुष समास), तेन रम्यः (तृतीया तत्पुरुष समास)। स्रोतोरन्ध्र...

सुभगम् — नाक के छिद्रों की ध्वनि से सुन्दरतापूर्वक। स्त्रोतसः रन्ध्रम् (षष्ठी तत्पुरुष समास), तस्य ध्वनितम् (षष्ठी तत्पुरुष समास), तेन सुभगम् (तृतीया तत्पुरुष समास)। काननोदुम्बराणाम्—जंगल के गूलरों का। कानने उदुम्बराः, तेषाम् (सप्तमी तत्पुरुष समास)। वास्स्यति—बहेगा। वा + लृट् (प्रथमपुरुष एकवचन)।

तत्र स्कन्दं नियतवसतिं पुष्पमेघीकृतात्मा
पुष्पासारैः स्नपयतु भवान्व्योमगङ्गाजलार्द्रैः।
रक्षाहेतोर्नवशशिभृता वासवीनां चमूना-
मत्यादित्यं हुतवहमुखे संभृतं तद्धि तेजः ॥४५॥

**अन्वय :**

तत्र नियतवसतिं स्कन्दं पुष्पमेघीकृतात्मा (सन्) भवान् व्योमगङ्गाजलार्द्रैः पुष्पासारैः स्नपयतु। तत् हि वासवीनां चमूनां रक्षाहेतोः नवशशिभृता हुतवहमुखे सम्भृतम् अत्यादित्यं तेजः।

**शब्दार्थ :**

तत्र — वहाँ यानी देवगिरि पर, नियतवसतिम्—स्थायी रूप से रहने वाले, स्कन्दम् — कार्त्तिकेय को, भवान् — आप (तुम), पुष्पमेघीकृतात्मा (सन्)—पुष्पमेघ-रूप बनकर, व्योमगङ्गाजलार्द्रैः—आकाश-गङ्गा के जल से आर्द्र, पुष्पासारैः — फूलों की बौछारों से, स्नपयतु—नहलाना, हि — क्योंकि, तत् वह (स्कन्द), वासवीनां चमूनां रक्षाहेतोः,— इन्द्र-सेना की रक्षा के लिए, नवशशिभृता — नवचन्द्र धारण करने वाले (शिव के द्वारा), हुतवहमुखे — अग्नि के मुख में, संभृतम् — स्थापित किया हुआ, अत्यादित्यं तेजः — सूर्य को भी अतिक्रमण करने वाला तेज है।

**भावानुवाद :**

वहाँ यानी देवगिरि पर स्थायी रूप से रहने वाले कार्त्तिकेय को तुम पुष्पमेघ-रूप बनकर आकाशगङ्गा के जल से आर्द्र फूलों की बौछारों से नहलाना, क्योंकि वह स्कन्द इन्द्र-सेना की रक्षा के लिए नवचन्द्र धारण करने वाले शिव के द्वारा अग्नि के मुख में स्थापित किया हुआ, सूर्य को भी अतिक्रमण करने वाला तेज है।

**संस्कृत-व्याख्या :**

कविः देवगिरिवासिनः कार्त्तिकेयस्य वर्णनं करोति पद्येऽस्मिन्—

तत्र—देवगिरौ, नियतवसतिम् – निश्चलावस्थानम् स्कन्दम्—कार्त्तिकेयम्, पुष्पमेघीकृतात्मा (सन्)—कुसुमवर्षुकमोघीकृतविग्रहः, भवान्—त्वम्, मेघः इत्यर्थः। व्योमगङ्गाजलार्द्रैः – आकाशगङ्गावारिक्लिन्नैः, पुष्पासारैः—कुसुमसम्पातैः, स्नपयतु—अभिषिञ्चतु, तत्—स्कन्दः, हि-यतो हि, वासवीनाम्—ऐन्द्रीणाम्, चमूनाम्—सेनानाम्, रक्षाहेतोः—रक्षणार्थम्, नवशशिभृता—नवीनचन्द्रधारिणा, शङ्करेण इत्यर्थः। हुतवहमुखे—अग्निमुखे, सम्भृतम्—सञ्चितम्, अत्यादित्यम्—सूर्यातिशायि, तेजः—प्रतापः।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघ कथयति—"हे मेघ! देवगिरौ पुष्पमेघीकृतशरीरः त्वं सुरसैन्यरक्षणार्थं शङ्करेण पुरा अग्निमुखे सञ्चितं अत्यादित्यं तेजः भगवन्तं कार्त्तिकेयं आकाशगङ्गासलिलार्द्रैः कुसुमसम्पातैः अभिषिञ्च।"

अत्र अर्थान्तरन्यासोऽलङ्कारः विद्यते।

**टिप्पणी :**

पुष्पमेघीकृतात्मा – फूल बरसाने वाले मेघ का रूप धारण किये हुए। पुष्पाणां मेघः (षष्ठी तत्पुरुष समास)। अपुष्पमेघः पुष्पमेघो यथा सम्पद्यते तथा कृतः पुष्पमेघीकृतः, पुष्पमेघ + च्वि + कृ + क्त (त), तथाविध आत्मा यस्य सः (बहुव्रीहिसमास)। व्योमगङ्गाजलार्द्रैः – आकाशगङ्गा के जल से आर्द्र। व्योम्नि गङ्गा (सप्तमी तत्पुरुष समास), तस्याः जलम् (षष्ठी तत्पुरुष समास), तेन आर्द्राः, तैः (तृतीया तत्पुरुष समास)। पुष्पासारैः—फूलों की बौछारों द्वारा। पुष्पाणाम् आसाराः, तैः (षष्ठी तत्पुरुष समास)। स्नापयतु – स्नान करावे। स्ना + णिच् + लोट् + तिप्। हुतवहमुखे—अग्नि के मुख में। हुतवहस्य मुखम्, तस्मिन् (षष्ठी तत्पुरुष समास)। सम्भृतम्—सञ्चित, एकत्र किया हुआ। सम् + भृ + क्त (त)।

ज्योतिर्लेखावलयि गलितं यस्य बर्हं भवानी
पुत्रप्रेम्णा कुवलयदलप्रापि कर्णे करोति।
धौतापाङ्गं हरशशिरुचा पावकेस्तं मयूरं
पश्चादद्रिग्रहणगुरुभिर्गर्जितैर्नर्तयेथाः ॥४६॥

**अन्वय :**

ज्योतिर्लेखावलयि यस्य गलितं बर्हं भवानी पुत्रप्रेम्णा कुवलयदलप्रापि कर्णे करोति, हरशशिरुचा धौतापाङ्गं पावकेः तं मयूरं पश्चात् अद्रिग्रहणगुरुभिः गर्जितैः नर्तयेथाः।

**शब्दार्थ :**

(हे मेघ ! ) ज्योतिर्लेखावयि—कान्तिमय रेखाओं के मण्डलों से युक्त, यस्य—जिसके, गलितम्—गिरे हुए, बर्हम्—पंख को, भवानी—पार्वती, पुत्र-प्रेम्णा—पुत्र के स्नेह से, कुवलयदलप्रापि—कमल की पंखुड़ी के साथ, कर्णे करोति—कान में धारण करती है, हरशशिरुचा—शिव के शिरः स्थित चन्द्रमा की चाँदनी से, धौताऽपाङ्गम्—धोयी गयी नेत्र-कोरों वाले, पावकेः—स्कन्द के, तं मयूरम्—उस मयूर को, पश्चात्—बाद में, अद्रिग्रहणगुरुभिः—देवगिरि की गुफा में गूंजने से बढ़े हुए, गर्जितैः—गर्जनों से नर्तयेथाः—नचाना।

**भावानुवाद :**

हे मेघ ! कान्तिमय रेखाओं के मण्डलों से युक्त जिसके गिरे हुए पंख को पार्वती पुत्र के स्नेह से कमल की पंखुड़ी के साथ कान में धारण करती है, शिव के शिरः स्थित चन्द्रमा की चाँदनी से धोयी गयी नेत्र-कोरों वाले स्कन्द के उस मयूर को, बाद में देवगिरि की गुफा में गूंजने से बढ़े हुए गर्जनों से नचाना।

**संस्कृत-व्याख्या :**

'यक्षः मेघं स्कन्दस्य मयूरं नर्तयितुं कथयति' इत्यस्य वर्णनं करोति कवि-कालिदास पद्यऽस्मिन्—

ज्योतिर्लेखावलयि—तेजः पङ्क्तमण्डलयुक्तम्, यस्य मयूरस्य, गलितम्—पतितम्, बर्हम्—पिच्छम्, भवानी—पार्वती, पुत्रप्रेम्णा—सुतस्नेहेन, कुवलय-दलप्रापि—नीलकमलपत्रप्रापकम्, कर्णे—श्रोत्रे, करोति—विदधाति, हरशशि-रुचा—शिवशिरश्चन्द्रिकया, धौताऽपाङ्गम्—धवलितनयनप्रान्तम्, पावकेः—अग्निभुवः, कार्त्तिकेयस्य इत्यर्थः। तम्—अमुम् मयूरम्—शिखिनम् पश्चात्—पुष्पाभिषेचनान्तरम्, अद्रिग्रहणगुरुभिः—देवगिरिसंक्रमणमहद्भिः, गर्जितैः स्तनितैः, नर्तयेथाः—नृत्यं कारय।"

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ ! पार्वती कान्तिमयरेखा वलययुक्तं यस्य मयूरस्य पतितं पिच्छं पुत्रस्नेहेन कुवलय-दलार्हे स्वकर्णे धारयति, शिवशिरः स्थित-चन्द्रिकया धवलितनेत्रप्रान्तं स्कन्दस्य तं मयूरं देवगिरिगुहाप्रतिध्वनिदीर्घैः गर्जनैः नृत्यं कारय।

**टिप्पणी :**

ज्योतिर्लेखावलयि—कान्तिमय रेखाओं के वक्रवाले। ज्योतिषः लेखाः (षष्ठी तत्पुरुष समास), तासां वलयम् (षष्ठी तत्पुरुष समास), तदस्ति अस्य

इति ज्योतिर्लेखावलय + इनिः (मत्वर्थे)। गलितम् – गिरे हुए, झड़े हुए। गल् + क्त (त)। धौताऽपाङ्गम्—श्वेत नेत्र-प्रान्त वाले। धौतौ अपाङ्गौ यस्य, तम् (बहुव्रीहिसमास)। अद्रिग्रहणगुरुभिः—पर्वत की प्रतिध्वनि से बढ़े हुए। अद्रेः ग्रहणम् (षष्ठी तत्पुरुष समास), तेन गुरूणि, तैः (तृतीया तत्पुरुष समास)। नर्तयेथाः—नचाना। नृत् + णिच् + विधिलिङ्।

आराध्यैनं शरवणभवं देवमुल्लङ्घिताध्वा
सिद्धद्वन्द्वैर्जलकणभयाद्वीणिभिर्मुक्तमार्गः।
व्यालम्बेथा सुरभितनयालम्भजां मानयिष्यन्
स्रोतोमूर्त्या भुवि परिणतां रन्तिदेवस्य कीर्तिम् ॥४७॥

**अन्वय :**

एनं शरवणभवं देवम् आराध्य वीणिभिः सिद्धद्वन्द्वैः जलकणभयात् त्यक्त-मार्गः (सन्) उल्लङ्घिताध्वा सुरभितनयालम्भजां भुवि स्त्रोतोमूर्त्या परिणतां रन्तिदेवस्य कीर्त्तिं मानयिष्यन् व्यालम्बेथाः।

**शब्दार्थ :**

शरवणभवम्—सरकण्डों के वन में उत्पन्न, एनं देवम् आराध्य—इस देव की आराधना करके यानी कार्त्तिकेय की आराधना करके, वीणिभिः सिद्ध-द्वन्द्वैः—(तुम) वीणाधारी सिद्ध-दम्पत्तियों द्वारा, जलकणभयात्—जल की बून्दों के भय से, त्यक्तमार्गः (सन्)—मार्ग छोड़ देने पर, उल्लङ्घिताध्वा—कुछ रास्ता पार करके, सुरभितनयालम्भजाम्—गौओं के बलिदान से उत्पन्न, भुवि स्त्रोतोमूर्त्या परिणताम्—(एवं) पृथिवी पर नदी के रूप में परिणत, रन्तिदेवस्य—(राजा) रन्तिदेव की, कीर्त्तिं मानयिष्यन्—कीर्त्ति का सम्मान करते हुए यानी चर्मण्वती नदी का सम्मान करते हुए, व्यालम्बेथाः—नीचे उतर कर ठहरना।

**भाषानुवाद :**

सरकण्डों के वन में उत्पन्न इस देव की आराधना करके यानी कार्त्तिकेय की आराधना करके तुम वीणाधारी सिद्ध-दम्पत्तियों द्वारा जल की बून्दों के भय से मार्ग छोड़ देने पर, कुछ रास्ता पार करके, गौओं के बलिदान से उत्पन्न एवं पृथिवी पर नदी के रूप में परिणत राजा रन्तिदेव की कीर्त्ति का सम्मान करते हुए यानी चर्मण्वती नदी का सम्मान करते हुए नीचे उतर कर ठहरना।

**संस्कृत-व्याख्या :**

'यक्षः मेघं चर्मण्वत्याः नद्याः पार्श्वं गन्तुं कथयति' इत्यस्य वर्णनं कविः करोति पद्येऽस्मिन्—

एनम्—इमम् स्कन्दम् इत्यर्थः । शरवणभवम्—बाणतृणोत्पन्नम्, देवम्—सुरम्, आराध्य—आराधनां कृत्वा, वीणिभिः—वीणावद्भिः, सिद्धद्वन्द्वैः—सिद्धमिथुनैः, जलकणभयात्—सलिललवभीतेः, त्यक्तमार्गः (सन्)—परित्यक्तपथः (सन्), उल्लङ्घिताध्वा—अतिक्रान्तमार्गः, सुरभितनयालम्भजाम्—गोसंज्ञपनजाताम्, भुवि—वसुधाम्, स्रोतोमूर्त्या—प्रवाहरूपेण, परिणताम्—रूपविशेषमापन्नाम्, रन्तिदेवस्य—तन्नामकस्य दशपुराधीशमहाराजस्य, कीर्तिम्—यशः, चर्मण्वतीनामधेयां नदीम् इत्यर्थः, मानयिष्यन्— सत्कारयिष्यन् व्यालम्बेथाः—आलम्ब्यावतरेः ।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघ कथयति—"हे मेघ ! भगवन्तं स्कन्दम् आराध्य जलवृष्टिं कुर्वन् यदा त्वम् अग्रे गमिष्यसि तदा वीणाधारिणः सिद्धाः सलिललवभयात् ते मार्गं त्यक्ष्यन्ति । अनन्तरं रन्तिदेवस्य कीर्त्तिभूतां चर्मण्वतीं नदीं प्राप्स्यसि । त्वया तस्याः नद्याः अपि सत्कारः करणीय ।"

अत्र अतिशयोक्तिरलङ्कारो वर्तते ।

**टिप्पणी :**

शरवणभवम्—कार्तिकेय को स्कन्द का जन्म सरकण्डों के वन में ही हुआ था । शराणां वनम् (षष्ठी तत्पुरुष समास), तत्र भवः (जन्म) यस्य सः, तम् (बहुव्रीहि समास) । जलकणभयात्—जलकणों के भय से । जलस्य कणाः (षष्ठीतत्पुरुष समास), तेभ्यः भयम्, तस्मात् (षष्ठीतत्पुरुष समास, हेतो पञ्चमी) । उल्लङ्घिताध्वा—कुछ और आगे जाकर । उल्लङ्घितः अध्वा येन सः (बहुव्रीहि समास) । परिणताम्—परिणत । परि + णम् + क्त (त) + टाप् । मानयिष्यन्—सम्मान करता हुआ । मान् + णिच् + लृट् (शतृ) ।

त्वय्यादातुं जलमवनते शार्ङ्गिणो वर्णचौरे
तस्याः सिन्धोः पृथुमपि तनुं दूरभावात्प्रवाहम् ।
प्रेक्षिष्यन्ते गगनगतयो नूनमावर्ज्य दृष्टी-
रेकं मुक्तागुणमिव भुवः स्थूलमध्येन्द्रनीलम् ॥४८॥

**अन्वय :**

शार्ङ्गिणः वर्णचौरे—त्वयि (चर्मण्वत्याः) जलम् आदातुम् अवनते (सति)

पृथुम् अपि दूरभावात् तनुं तस्याः सिन्धोः प्रवाहं गगनगतयः दृष्टीः आवर्ज्य एकं स्थूलमध्येन्द्रनीलं भुवः मुक्तागुणम् इव नूनं प्रेक्षिष्यन्ते ।

**शब्दार्थ :**

शार्ङ्गिणः वर्णचौरे—कृष्ण का रंग चुराने वाले, त्वयि चर्मण्वत्याः जलम् आदातुम् अवनते (सति)—तुम्हारे चर्मण्वती का जल लेने के लिए झुकने पर, पृथुम् अपि—विस्तृत होने पर भी, दूरभावात्—दूर होने से, तनुम्—पतली (दीख पड़ने वाली), तस्याः सिन्धोः—उस नदी का, प्रवाहम्—धारा को, गगनगतयः—गगनचारी सिद्ध—गन्धर्व आदि, दृष्टीः आवर्ज्य—नेत्रों को नीचे लगाकर, एकं स्थूलमध्येन्द्रनीलम्—एक लड़ी वाली और मध्य में स्थूल इन्द्रनीलमणि से युक्त, भुवः—पृथिवी की, मुक्तागुणम् इव—मोतियों की माला की तरह, नूनम्—निश्चय ही, प्रेक्षिष्यन्ते—देखेंगे ।

**भावानुवाद :**

कृष्ण का रंग चुराने वाले तुम्हारे चर्मण्वती का जल लेने के लिए झुकने पर, विस्तृत होने पर भी दूर होने से पतली दीख पड़ने वाली उस नदी की धारा को गगनचारी सिद्ध-गन्धर्व आदि नेत्रों को नीचे लगा कर एक लड़ी वाली और मध्य में स्थूल इन्द्रनीलमणि से युक्त पृथिवी की मोतियों की माला की तरह निश्चय ही देखेंगे ।

**संस्कृत-व्याख्या :**

चर्मण्वत्यां नद्याम् अवतरकस्य मेघस्य शोभायाः वर्णनं करोति कविकालिदासः पद्येऽस्मिन् —

शार्ङ्गिणः = कृष्णस्य, वर्णचौरे = कान्त्यपहारके, त्वयि—भवति, (चर्मण्वत्याः) जलम् = सलिलम्, आदातुम् = ग्रहीतुम्, अवनते (सति) = लम्बमाने (सति), पृथुम् अपि = स्थूलम् अपि, दूरभावात् = सुदूरभावात्, तनुम् = सूक्ष्मतया प्रतीयमानम्, तस्याः = अमुष्याः, सिन्धोः = नद्याः, चर्मण्वत्याः इति भाव । प्रवाहम् = प्रवृत्तिम्, गगनगतयः = खेचराः, सिद्धगन्धर्वादयः इत्यर्थः । दृष्टीः = नयनानि, आवर्ज्य = नमयित्वा, एकम् = एकयष्टिकम्, स्थूलमध्येन्द्रनीलम् = पीवरमध्येन्द्रनीलमणिम्, भुवः = वसुधायाः, मुक्तागुणम् = हारम्, इव = यथा, नूनम् = निश्चयेन, प्रेक्षिष्यन्ते = द्रक्ष्यन्ति ।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ ! यदा कृष्णवर्णः त्वं चर्मण्वत्याः नद्याः जलग्रहणार्थम् अवनतो भविष्यसि तदा खेचराः सिद्धगन्धर्वादयः दूरत्वात् सूक्ष्मतया प्रतीयमानं तस्याः नद्याः प्रवाहं

नयनानि नमयित्वा एकयष्टिकं स्थूलेन्द्रमणियुक्तं वसुधायाः मुक्ताहारम् इव द्रक्ष्यन्ति ।"

अत्र सङ्करालङ्कारो वर्तते ।

**टिप्पणी :**

शार्ङ्गिणः—शार्ङ्ग धनुष धारण करने वाले कृष्ण के। शृङ्गस्य इदं शार्ङ्गम्, शृङ्ग + अण्। तदस्यास्तीति शार्ङ्गी, शार्ङ्ग + इनिः, तस्य। गगनगतयः—आकाश में विचरण करने वाले। गगने गतिः येषां, ते (बहुव्रीहि समास) मुक्तागुणम्—मोतियों का हार। मुक्तानां गुणः, तम् (षष्ठी तत्पुरुष समास) प्रेक्षिष्यन्ते—देखेंगे। प्र + ईक्ष् + लृट् + झ।

तामुत्तीर्य व्रज परिचितभ्रूलताविभ्रमाणां
पक्ष्मोत्क्षेपादुपरिविलसत्कृष्णशारप्रभाणाम्।
कुन्दक्षेपानुगमधुकरश्रीमुषामात्मबिम्बं
पात्रीकुर्वन् दशपुरवधूनेत्रकौतूहलानाम् ॥४८॥

**अन्वय :**

तां (चर्मण्वतीम्) उत्तीर्य आत्मबिम्बं परिचितभ्रूलताविभ्रमाणां पक्ष्मोत्क्षेपात् उपरिविलसत्कृष्णसारप्रभाणां कुन्दक्षेपानुगमधुकरश्रीमुषां दशपुरवधूनेत्रकौतूहलानां पात्रीकुर्वन् व्रज।

**शब्दार्थ :**

तां (चर्मण्वतीम्) उत्तीर्य—उस (चर्मण्वती को) पार कर, आत्मबिम्बम्—(तुम) अपने स्वरूप को, दशपुरवधूनेत्रकौतूहलानाम्—दशपुर की स्त्रियों के नेत्रों के कौतूहल का, पात्रीकुर्वन्—विषय बनाते हुए, व्रज—जाना, परिचितभ्रूलताविभ्रमाणाम्—जो (नेत्र-कौतूहल) भौंहों-रूपी लताओं के विलास से परिचित है, पक्ष्मोत्क्षेपात्—पलक उठाने के कारण उपरिविलसत्कृष्णशारप्रभाणाम्—उपरि-(जिनके) ऊपर, कृष्णशारप्रभाणाम्—कृष्ण लाल तथा श्वेत कान्ति, विलसत्—शोभित रहती है, कुन्दक्षेपानुगमधुकरश्रीमुषाम्—कुन्दक्षेपानुगमधुकर-(एवं) जो कुन्दपुष्पों के इधर-उधर हिलने-डुलने के पीछे (स्वयं भी) हिलने-डुलने वाले भ्रमरों की, श्रीमुषाम्—कान्ति को चुराने वाले हैं।

**भाषानुवाद :**

उस चर्मण्वती को पार करके तुम अपने स्वरूप को दशपुर की स्त्रियों के नेत्रों के कौतूहल का विषय बनाते हुए जाना, जो (नेत्र-कौतूहल) भौंहों-रूपी लताओं के विलास से परिचित है, पलक उठाने के कारण जिनके ऊपर कृष्ण,

लाल तथा श्वेत कान्ति शोभित रहती है एवं जो कुन्दपुष्पों के इधर-उधर हिलाने-डुलाने के पीछे स्वयं भी हिलने-डुलने वाले भ्रमरों की कान्ति को चुराने वाले हैं।

**संस्कृत-व्याख्या :**

कविः दशपुरवधूनां नयनविलासानां वर्णनं करोति पद्येऽस्मिन्—

ताम्—चर्मण्वतीम्, उत्तीर्य—उत्तरणं कृत्वा, आत्मबिम्बम्—स्वमूर्तिम्, परिचितभ्रूलताविभ्रमाणाम्—ज्ञातभ्रूवल्लीविलासानाम्, पक्ष्मोत्क्षेपात्—पक्ष्मोन्नमात्, उपरिविलसत्कृष्णशारप्रभाणाम्—उपरिविलसत्कृष्ण रक्तसितकान्तीनाम्, कुन्दक्षेपानुगमधुकरश्रीमुषाम्—कुन्दपुष्प चलनानुसारिभ्रमरशोभामुषाम्, दशपुरवधूनेत्रकौतूहलानाम्—रन्तिदेवनगरनारीनयनाभिलाषाणाम्, पात्रीकुर्वन्—भाजनीकुर्वन्, व्रज—गच्छ।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ! चर्मण्वतीं नदीम् उत्तीर्य त्वं स्वमूर्तिं, परिचितभ्रूलताविलासानां पक्ष्मोन्नमनात् उपरिविलसत्कृष्णसितारुणकान्तीनां, कुन्दकुसुमक्षेपानुगमभ्रमरशोभामुषां दशपुरवधूनेत्रकौतूहलानां विषयीकुर्वन् गच्छ।"

अत्र उपमाऽलङ्कारो विद्यते।

**टिप्पणी :**

आत्मबिम्बम्—अपने स्वरूप को। आत्मनः बिम्बः, तम् (षष्ठी तत्पुरुष समास)। परिचितभ्रूलताविभ्रमाणाम्—जो लता सदृश लम्बी भौंहों के विलास मे परिचित है। भ्रुवः लताः इव भ्रूलताः (उपमितकर्मधारय समास)। भ्रूलतानां विभ्रमाः (षष्ठी तत्पुरुष समास)। परिचिता भ्रुलताविभ्रमा येषु, तानि परिचितभ्रूलताविभ्रमाणि, तेषाम् (बहुव्रीहि समास)। उपरिविलसत्कृष्णशारप्रभाणाम्-जिनके ऊपर कृष्ण, लाल एवं श्वेत कान्ति शोभित हैं। उपरि विलसन्त्यः कृष्णशाराः प्रभाः येषां तानि, तेषाम् (बहुव्रीहिसमास)। कुन्दक्षेपानुगममधुकरश्रीमुषाम्-जो कुन्दपुष्पों के हिलने का अनुसरण करने वाले भ्रमर की शोभा को चुराने वाले हैं। कुन्दानां क्षेपः (षष्ठी तत्पुरुष समास), कुन्दक्षेपस्य अनुगाः (षष्ठी तत्पुरुष समास)। कुन्दक्षेपानुगाश्च ते मधुकरा (कर्मधारयसमास)। तेषां श्रीः (षष्ठी तत्पुरुष समास), तां मुष्णन्ति इति कुन्दक्षेपानुगममधुकरश्रीमूंषि, तेषाम् (उपपदसमास)।

ब्रह्मावर्तं जनपदमथच्छायया गाहमानः
क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद्भजेथाः।

राजन्यानां शितशरशतैर्यत्र गाण्डीवधन्वा
धारापातैस्त्वमिव कमलान्यभ्यवर्षन्मुखानि ॥५०॥

**अन्वय :**

अथ ब्रह्मावर्तं जनपदं छायया गाहमानः क्षत्रप्रधनपिशुनं तत् कौरवं क्षेत्रं भजेथाः यत्र गाण्डीवधन्वा शितशरतैः राजन्यानां मुखानि धारापातैः कमलानि त्वम् इव अभ्यवर्षत् ।

**शब्दार्थ :**

अथ = इसके बाद, ब्रह्मावर्तं जनपदम् = ब्रह्मावर्त नाम के देश में, छायया = छाया द्वारा, गाहमानः = प्रवेश करते हुए, क्षत्रप्रधनपिशुनम् = क्षत्रियों के युद्ध-सूचक, तत् कौरवं क्षेत्रम् = उस (प्रसिद्ध) कौरवों के क्षेत्र को यानी कुरुक्षेत्र को, भजेथाः = जाना, यत्र = जहाँ, गाण्डीवधन्वा = गाण्डीवधनुषधारी (अर्जुन) ने, राजन्यानां मुखानि = राजाओं के मुखों पर यानी सिरों पर, शितशरशतैः = सैकड़ों तीखे बाण, धारापातैः कमलानि त्वम् इव अभ्यवर्षत् = यों बरसाये थे, जैसे तुम कमलों पर जलधारायें बरसाते हो ।

**भाषानुवाद :**

इसके बाद ब्रह्मावर्त नाम के देश में छाया द्वारा प्रवेश करते हुए, क्षत्रियों के युद्ध-सूचक उस प्रसिद्ध कौरवों के क्षेत्र को यानी कुरुक्षेत्र को जाना, जहाँ गाण्डीवधनुषधारी अर्जुन ने राजाओं के मुखों पर यानी सिरों पर सैकड़ों तीखे बाण यों बरसाये थे, जैसे तुम कमलों पर जलधारायें बरसाते हो ।

**संस्कृत-व्याख्या :**

महाकविः कालिदासः ब्रह्मावर्तं कुरुक्षेत्रञ्च वर्णयति पद्येऽस्मिन्—

अथ—अनन्तरम्, ब्रह्मावर्तम्—ब्रह्मावर्तनामकम्, जनपदम्—देशम्, छायया—प्रतिबिम्बेन, गाहमानः—प्रविशन्, क्षत्रप्रधनपिशुनम्—राजन्ययुद्धसूचकम्, तत्—प्रसिद्धम्, कौरवम्—कुरूणाम्, क्षेत्रम्—स्थानम्, कुरुक्षेत्रम् इत्यर्थः । भजेथाः—सेवस्व, यत्र—कुरुक्षेत्रे, गाण्डीवधन्वा—अर्जुनः, शितशरशतैः—निशितबाणसहस्रैः, राजन्यानाम्—क्षत्रियाणाम्, मुखानि—वदनानि, शिरांसि इति भावः । धारापातैः—आसारैः, कमलानि—पद्मानि, इव—यथा, अभ्यवर्षत्—अभिमुख वृष्टवान् ।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ ! त्वं छायारूपेण ब्रह्मावर्तं जनपद प्रविश्य कुरुक्षेत्रं गच्छ, यत्र अर्जुनः क्षत्रियाणां शिरःसु तथैव बाणवृष्टि कृतवान् यथा त्वं पद्मेषु जलवृष्टि करोषि ।"

अत्र उपमाऽलङ्कारो वर्तते ।

**टिप्पणी :**

क्षत्रप्रधनपिशुनम्—क्षत्रियों के युद्ध का सूचक । क्षत्राणां प्रधनं (षष्ठी तत्पुरुष समास), तस्य पिशुनम् (षष्ठी तत्पुरुष समास) । 'पिशुनौ खलसूचकौ' इस कोश के अनुसार पिशुन शब्द का 'सूचक' अर्थ ग्रहण करना चाहिए । गाण्डीवधन्वा—गाण्डीव धनुषधारी अर्जुन । गाण्डीवः धनुः यस्य सः (बहुव्रीहि-समास) । शितशरशतैः-सैकड़ों तेज बाणों से । शिताश्च ते शराः (कर्मधारयसमास), तेषां शतानि, तैः (षष्ठी तत्पुरुषसमास) । धारापातैः—(जल की) धाराओं के गिराने से । धाराणां पाताः, तैः (षष्ठी तत्पुरुष समास) ।

हित्वा हालामभिमतरसां रेवतीलोचनाङ्कां
बन्धुप्रीत्या समरविमुखो लाङ्गली याः सिषेवे ।
कृत्वा तासामधिगममपां सौम्य सारस्वतीना-
मन्तःशुद्धस्त्वमपि भविता वर्णमात्रेण कृष्णः ॥५१॥

**अन्वय :**

सौम्य ! बन्धुप्रीत्या समरविमुखः लाङ्गली अभिमतरसां रेवतीलोचनाङ्कां हालां हित्वा याः (अपः) सिषेवे, तासां सारस्वतीनाम् अपाम् अधिगमं कृत्वा अन्तः शुद्धः त्वमपि वर्णमात्रेण कृष्णः भविता ।

**शब्दार्थ :**

सौम्य—हे सुभग ! बन्धुप्रीत्या—बन्धुओं के प्रति प्रेम होने के कारण, समरविमुखः—युद्ध से विमुख होकर, लाङ्गली—बलराम ने, अभिमतरसाम्—अभीष्ट स्वाद वाली, रेवती लोचनाङ्काम्—(तथा) रेवती के नेत्रों द्वारा चिह्नित, हालां हित्वा—मदिरा को छोड़कर, याः (अपः) सिषेवे—जिस (जल का) सेवन किया था, तासां सारस्वतीनाम् अपाम् अधिगमं कृत्वा—सारस्वतीनाम् सरस्वती नदी के, तासाम् अपाम् अधिगमं कृत्वा-उसी जल का सेवन करके, अन्तः शुद्धः त्वमपि—अन्तः करण से शुद्ध हुए तुम भी, वर्णमात्रेण कृष्णः भविता—केवल रंग से काले रहोगे ।

**भाषानुवाद :**

हे सुभग ! बन्धुओं के प्रति प्रेम होने के कारण युद्ध से विमुख होकर बलराम ने अभीष्ट स्वादवाली तथा रेवती के नेत्रों द्वारा चिह्नित मदिरा को छोड़कर जिस जल का सेवन किया था, सरस्वती नदी के उसी जल का सेवन करके अन्तःकरण से शुद्ध हुए तुम भी केवल रंग से काले रहोगे ।

**संस्कृत-व्याख्या :**

महाकविः कालिदासः सरस्वत्याः नद्याः पावनस्य जलस्य वर्णनं करोति पद्येऽस्मिन्—

सौम्य— हे सौम्य !, बन्धुप्रीत्या—बान्धवस्नेहेन, समरविमुखः—युद्धपराङ्मुखः, लाङ्गली—हलधरः, बलरामः इति भावः। अभिमतरसाम्—अभीष्टस्वादाम्, रेवतीलोचनाङ्काम्—स्वप्रियानेत्रचिह्नाम्, हालाम्—सुराम्, हित्वा—परित्यज्य, याः—सारस्वतीः अपः, सेवे—सेवितवान्, तासाम्—अमूषाम्, सारस्वतीनाम्—सरस्वतीसम्बन्धिनीनाम्, अपाम्—जलानाम्, अधिगमं कृत्वा—सेवनं विधाय, अन्तः शुद्धः—निर्मलाऽन्तःकरणः, त्वमपि—मेघोऽपि, वर्णमात्रेण—रूपेणैव, कृष्णः—श्यामः, भविता—भविष्यसि।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ ! कुरुक्षेत्रे वहन्त्याः सरस्वत्याः नद्याः जलं सेवित्वा त्वम् अन्तः शुद्धो भविष्यसि। त्वं वर्णमात्रेण कृष्णः भविष्यसि। बन्धुस्नेहेन युद्धविमुखो भूत्वा बलरामोऽपि रेवतीनेत्रचिह्नितां सुरां परित्यज्य अस्याः नद्याः जलं सेवितवान्।"

**टिप्पणी :**

बन्धुप्रीत्या—बन्धुओं यानी कौरव-पाण्डवों के प्रेम से। बन्धूनां प्रीतिः, तया (षष्ठी तत्पुरुष समास)। महाभारत के युद्ध में बलराम ने बान्धव कौरवों और पाण्डवों के प्रति स्नेह होने के कारण किसी के पक्ष में भी सम्मिलित न होकर तीर्थयात्रा की थी। अभिमतरसाम्—अभीष्ट स्वाद वाली। अभिमतो रसो यस्याः, ताम् (बहुव्रीहि समास)। रेवतीलोचनाङ्काम्—रेवती के नेत्रों के प्रतिबिम्ब से चिह्नित। रेवत्याः लोचने (षष्ठी तत्पुरुष समास), ते एव अङ्कः यस्याः, ताम् (बहुव्रीहि समास)। हित्वा—छोड़कर। हा + क्त्वा (त्वा)।

तस्माद्गच्छेरनुकनखलं शैलराजावतीर्णां
जह्नोः कन्यां सगरतनयस्वर्गसोपानपङ्क्तिम्।
गौरीवक्त्रभ्रुकुटिरचनां या विहस्येव फेनैः
शम्भोः केशग्रहणमकरोदिन्दुलग्नोर्मिहस्ता ॥५२॥

**अन्वय :**

(हे मेघ !) तस्मात् अनुकनखलं शैलराजावतीर्णां सगरतनयस्वर्गसोपानपङ्क्तिं जह्नोः कन्यां गच्छेः, या फेनैः गौरीवक्त्रभ्रुकुटिरचनां विहस्य इव इन्दुलग्नोर्मिहस्ता शम्भोः केशग्रहणम् अकरोत्।

**शब्दार्थ :**

(हे मेघ !), तस्मात्—उस (कुरुक्षेत्र) से, अनुकनखलम्—कनखल (पर्वत) के निकट, शैलराजावतीर्णाम्—पर्वतराज (हिमालय) से उतरी हुई, सगर-तनयस्वर्गसोपानपङ्क्तिम्सगरतनय—(एवं) सगर-पुत्रों की, स्वर्गसोपानपङ्क्तिम् —स्वर्ग की सीढ़ी-रूप, जह्नोः कन्यां गच्छेः—जह्नु की कन्या यानी गङ्गा के पास जाना, या—जिसने, फेनैः—(अपने) फेनों के द्वारा, गौरीवक्त्रभ्रुकुटि-रचनां विहस्य इव—पार्वती के मुख के भ्रूभङ्गों का उपहास-सा करके, इन्दुलग्नोर्मिहस्ता—लहर रूपी-हाथों से चन्द्रमा सहित, शम्भोः—शिव के, केशग्रहणम् अकरोत्—केशों को पकड़ लिया है।

**भाषानुवाद :**

हे मेघ ! उस कुरुक्षेत्र से कनखल पर्वत के निकट पर्वतराज हिमालय से उतरी हुई एवं सगर-पुत्रों की स्वर्ग की सीढ़ी-रूप जह्नु की कन्या यानी गङ्गा के पास जाना, जिसने अपने फेनों के द्वारा पार्वती के मुख के भ्रूभङ्गों का उपहास-सा करके लहर-रूपी हाथों से चन्द्रमा सहित शिव के केशों को पकड़ लिया है।

**संस्कृत-व्याख्या :**

हे मेघ ! तस्मात्—कुरुक्षेत्रात्, अनुकनखलम्—कनखलपर्वतसमीपे, शैल राजावतीर्णाम्—हिमालयावरूढाम्, सगरतनयस्वर्गसोपानपङ्क्तिम्—सगर पुत्रनाकारोहणनिःश्रेणीम्, जह्नोः—जह्नुनामकस्यभूपतेः, कन्याम् कुमारीम् गच्छेः—व्रज, या—जाह्नवी, फेनैः—डिण्डीरैः, गौरीवक्त्रभ्रुकुटिरचनाम्—, पार्वतीमुखभ्रूभङ्गकरणम्, विहस्य—हसित्वा, इव—यथा, इन्दुलग्नोर्मिहस्ता —चन्द्रलग्नतरङ्गकरा, शम्भोः—शङ्करस्य, केशग्रहणम्—कचग्रहणम्, अकरोत् —कृतवती।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ ! त्वं कुरुक्षेत्रात् कनखलपर्वतसमीपे हिमवतः अवतीर्णां सगरसुतानां स्वर्गसाधन-भूतां भागीरथीं प्राप्स्यसि, या भागीरथी फेनैः अवहस्य इव पार्वत्याः भ्रूभङ्ग तरङ्गकराभ्यां शङ्करस्य केशग्रहणं कृतवती।"

अत्र संसृष्टिरलङ्कारो विद्यते।

**टिप्पणी :**

अनुकनखलम्—कनखल नामक पर्वत के समीप। कनखलस्य समीपे इति अनुकनखलम् (अव्ययीभाव समास)। शैलराजावतीर्णाम्—पर्वतराज हिमा-

भय से उतरी हुई। शैलानां राजा शैलराजः, तस्मात् (षष्ठी तत्पुरुष समास)। सगरतनयस्वर्गसोपानपङ्क्तिम्—सगर के पुत्रों के लिए स्वर्ग की सीढ़ी (स्वरूप)। सगरस्य तनयाः सगरतनयाः (षष्ठी तत्पुरुष समास)। सोपानानां पङ्क्तिः (षष्ठी तत्पुरुष समास)। स्वर्गस्य सोपानपङ्क्तिः (षष्ठी तत्पुरुष समास)। सगरतनयानां स्वर्गसोपानपङ्क्तिः, ताम् (षष्ठी तत्पुरुष समास)।

**सगर :**

राजा सगर ने सौवाँ यज्ञ आरम्भ किया था। इन्द्र ने अपने पद के अपहरण की आशंका से इनके घोड़े को चुराकर पाताल में कपिल मुनि के पास बांध दिया। सगर के साठ हजार पुत्र घोड़े की खोज के प्रसङ्ग में पाताल पहुँचे। घोड़े को देखकर उन्होंने कपिलमुनि को चोर समझकर उन का अपमान किया। कपिलमुनि के देखने मात्र से ही वे सब सगर-पुत्र जलकर भस्म हो गये। उन पुत्रों के उद्धार के लिए अंशुमान् आदि कई राजाओं ने गङ्गा को मर्त्यलोक में लाने का प्रयत्न किया, पर वे सब निष्फल हो गये। अन्त में भगीरथ नाम के महाराज ने घोर तपस्या कर गङ्गा को मर्त्यलोक में लाकर अपने पूर्वजों का उद्धार किया।

विहस्य—हँसकर। वि + हस् + ल्यप् (य)। केशग्रहणम् अकरोत्—बालों को पकड़ लिया। केशानां ग्रहणम् तत् (षष्ठी तत्पुरुष समास)।

**तस्याः पातुं सुरगज इव व्योम्नि पश्चार्धलम्बी,**
**त्वं चेदच्छस्फटिकविशदं तर्कयेस्तिर्यगम्भः**
**संसर्पन्त्या सपदि भवतः स्रोतसिच्छाययाऽसौ,**
**स्यादस्थानोपगतयमुनासङ्गमेवाभिरामा ॥५३॥**

**अन्वय :**

सुरगज इव व्योम्नि पश्चार्धलम्बी अच्छस्फटिकविशदं तस्याः गङ्गायाः अम्भः चेत् तिर्यक् पातुं तर्कयेः (तर्हि) सपदि स्रोतसि संसर्पन्त्या भवतः छायया असौ अस्थानोपगतयमुनासङ्गमा इव अभिरामा स्यात्।

**शब्दार्थ :**

सुरगज इव—ऐरावत (हाथी) के समान, व्योम्नि—आकाश में, पश्चार्धलम्बी—पिछले आधे भाग से झुके हुए, अच्छस्फटिकविशदम्—स्वच्छ स्फटिक की तरह उज्ज्वल, तस्याः गङ्गायाः—उस गङ्गा के, अम्भः—जल को, चेत्—यदि, तिर्यक् पातुं त्वं तर्कयेः—तुम तिरछे पीने का विचार करोगे (तर्हि—

तो), सपदि—सहसा, स्त्रोतसि संसर्पन्त्या—प्रवाह में पड़ती हुई, भवतः छायया—आपकी (तुम्हारी) परछाईं से, असौ—वह (गङ्गा), अस्थानोपगत-यमुनासङ्गमा इव—प्रयाग से भिन्न स्थान में यमुना से मिली हुई की तरह, अभिरामा स्यात्—मनोहर प्रतीत होगी।

भाषानुवाद :

ऐरावत (हाथी) के समान आकाश में पिछले आधे भाग से झुके हुए, स्वच्छ स्फटिक की तरह उज्ज्वल उस गङ्गा के जल को यदि तुम तिरछे पीने का विचार करोगे तो सहसा प्रवाह में पड़ती हुई तुम्हारी परछाईं से वह गङ्गा प्रयाग से भिन्न स्थान में यमुना से मिली हुई की तरह मनोहर प्रतीत होगी।

संस्कृत-व्याख्या :

गङ्गायां मेघे अवतरिते सति कविः गङ्गयमुनयोः सङ्गमस्य संभावनां करोति पद्येऽस्मिन्—

सुरगज इव—ऐरावत इव, व्योम्नि—गगने, पश्चार्धलम्बी—पश्चिमार्धलम्बी, अच्छस्फटिकविशदम्—विमलस्फटिकोज्ज्वलम्, तस्याः—अमुष्याः, गङ्गायाः इत्यर्थः। अम्भः—वारि, चेत—यदि, तिर्यक्—तिर्यग्भूतम्, पातुम्—पानं कर्तुम्, तर्कयेः—विचारयेः (तर्हि), सपदि—सहसा, स्त्रोतसि—प्रवाहे, संसर्पन्त्या—संक्रामन्त्या, भवतः—तव, छायया—प्रतिबिम्बेन, असौ—सा, गङ्गा। इत्यर्थः। अस्थानोपगतयमुनासङ्गमा—प्रयागेतरस्थानप्राप्तयमुनासमागमा, इव—यथा, अभिरामा—मनोहरा, स्यात्—भवेत्।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ! सुरगज इव पश्चार्धभागेन गगने स्थित्वा पूर्वार्धेन जलोन्मुखः त्वं यदि समुज्ज्वलस्य गङ्गाजलस्य तिर्यक् पानं कर्तुं विचारयिष्यसि तदा जले संक्रामन्त्या तव प्रतिबिम्बेन तस्याः गङ्गायाः शोभाः तथा भविष्यति यथा प्रयागात् अन्यत्रापि कालिन्द्या तस्याः सङ्गमः स्यात्।

अत्र संसृष्टिरलङ्कारो विद्यते।

टिप्पणी :

अच्छस्फटिकविशदम्—निर्मल स्फटिक (पत्थर) की तरह स्वच्छ। अच्छश्चासौ स्फटिकः (कर्मधारय समास)। अच्छस्फटिक इव विशदम् अच्छस्फटिकविशदम्, तत् (उपमान कर्मधारय समास)। अस्थानोपगतयमुनासङ्गमा—प्रयाग से भिन्न स्थान पर प्राप्त किया है यमुना से सङ्गम जिसने। यमुनायाः

सङ्गमः (षष्ठी तत्पुरुष समास), अस्थाने उपगतः (सप्तमी तत्पुरुष समास), अस्थानोपगतः यमुनासङ्गमो यस्याः सा (बहुव्रीहि समास)।

आसीनानां सुरभितशिलं नाभिगन्धैर्मृगाणां
तस्या एव प्रभवमचलं प्राप्य गौरं तुषारैः।
वक्ष्यस्यध्वश्रमविनयने तस्य शृङ्गे निषण्णः
शोभां शुभ्रत्रिनयनवृषोत्खातपङ्कोपमेयाम् ॥५४॥

**अन्वय :**

(हे मेघ !) आसीनानां मृगाणां नाभिगन्धैः सुरभितशिलं तस्याः एव प्रभवं तुषारैः गौरम् अचलं प्राप्य अध्वश्रमविनयने तस्य शृङ्गे निषण्णः शुभ्रत्रिनयन-वृषोत्खातपङ्कोपमेयां शोभां वक्ष्यसि।

**शब्दार्थ :**

हे मेघ !, आसीनानां मृगाणाम्—बैठे हुए मृगों की नाभिगन्धैः—नाभि की गन्ध से, सुरभितशिलम्—सुगन्धित शिलाओं वाले, तस्याः एवं प्रभवम्—उस गङ्गा के ही उद्गम स्थल, तुषारैः गौरम् अचलं प्राप्य—हिम-शुभ्र (हिमालय) पर्वत पर पहुँचकर, अध्वश्रमविनयने—मार्ग की थकावट को दूर करने वाली, तस्य शृङ्गे—उसकी चोटी पर, निषण्णः—बैठे हुए, शुभ्र-त्रिनयनवृषोत्खातपङ्कोपमेयाम्—शुभ्रत्रिनयनवृष—(तुम) शिव के श्वेत बैल द्वारा, उत्खातपङ्कोपमेयाम्—उखाड़ कर ऊपर डाले हुए कीचड़ की तरह, शोभां वक्ष्यसि शोभा को धारण करोगे।

**भाषानुवाद :**

हे मेघ ! बैठे हुए मृगों की नाभि की गन्ध से सुगन्धित शिलाओं वाले उस गङ्गा के ही उद्गम-स्थल, हिम-शुभ्र हिमालय पर्वत पर पहुँच कर, मार्ग की थकावट को दूर करने वाली उसकी चोटी पर बैठे हुए तुम शिव के श्वेत बैल द्वारा उखाड़ कर ऊपर डाले हुए कीचड़ की तरह शोभा को धारण करोगे।

**संस्कृत-व्याख्या :**

'यक्षः हिमालयस्य शिखरे विश्रामं कर्त्तुं मेघं कथयति' इत्यस्य वर्णनं कविकालिदासः करोति पद्येऽस्मिन्—

(हे मेघ !), आसीनानाम्—उपविष्टानाम्, मृगाणाम्—हरिणानाम् नाभिगन्धैः—कस्तूरी-गन्धैः, सुरभितशिलम्—सुगन्धितप्रस्तरम्, तस्याः एव—अमुष्याः एव, प्रभवम्—कारणम्, तुषारैः—हिमैः, गौरम्—श्वेतम्, अचलम्

—पर्वतम्, प्राप्य—आप्ल्वा, अध्वश्रमविनयने—मार्गपरिश्रमापनोदने, तस्य—अमुष्य हिमालयस्य इत्यर्थः। शृङ्गे—शिखरे, निषण्णः—उपविष्टः, शुभ्रत्रिनयनवृषोत्खातपङ्कोपमेयाम्—श्वेतशिववृषभविदारितकर्दमसदृशीम्, शोभाम्—द्युतिम्, वक्ष्यसि—धारयिष्यसि।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ! कस्तूरीगन्धैः सुगन्धितं, तुहिनधवलं गङ्गायाः उत्पत्तिकारणं हिमालयं प्राप्य यदि त्वं तस्य मार्गपरिश्रमापनोदके शिखरे स्थास्यसि तदा तव शोभा तादृशी भविष्यति यादृशी शिववृषभशृङ्गसंलग्नस्य कर्दमस्य भवति।

अत्र उपमाऽलङ्कारः अस्ति।

**टिप्पणी :**

आसीनानाम्—बैठे हुए (की)। आस्+शानच् (आन)। सुरभितशिलम्-सुगन्धित शिलाओं वाले। सुरभिताः शिलाः यस्य, तम् (बहुव्रीहि समास)। अध्वश्रमविनयने—मार्ग की थकावट को दूर करने वाले। अध्वनः श्रमस्य विनयने (षष्ठी तत्पुरुष समास)। शुभ्रत्रिनयनवृषोत्खातपङ्कोपमेयाम्—शिव के श्वेत बैल के द्वारा उछाले गये कीचड़ से तुलना किये जाने योग्य। त्रिनयनस्य वृषः (षष्ठी तत्पुरुष समास), शुभ्रः त्रिनयनवृषः (कर्मधारय समास), तेन उत्खातः (तृतीया तत्पुरुष समास), तादृश, पङ्कः (कर्मधारय समास), तेन उपमेया, ताम् (तृतीया तत्पुरुष समास)।

तं चेद्वायौ सरति सरलस्कन्धसंघट्टजन्मा
बाधेतोल्काक्षपितचमरीबालभारो दवाग्निः।
अर्हस्येनं शमयितुमलं वारिधारासहस्रै-
रापन्नार्तिप्रशमनफलाः सम्पदो ह्युत्तमानाम्॥५५॥

**अन्वय :**

वायौ सरति (सति) सरलस्कन्धसंघट्टजन्मा, उल्काक्षपितचमरीबालभारः दवाग्निः चेत् तं बाधेत (तर्हि) एनं वारिधारासहस्रैः अलं शमयितुम् अर्हसि। हि उत्तमानां सम्पदः आपन्नार्तिप्रशमनफलाः (भवन्ति)।

**शब्दार्थ :**

वायौ सरति (सति)—वायु के चलने पर, सरलस्कन्धसंघट्टजन्मा—देवदारु की यानी चीड़ वृक्ष की शाखाओं की रगड़ से उत्पन्न, उल्काक्षपितचमरीबालभारः—(एवं) चिनगारियों से चमरी गायों के बाल-समूह को झुलसा देने वाली, दवाग्निः—दावानल यानी वन की आग, चेत्—यदि, तं बाधेत—उस

(हिमालय) को पीड़ित करे (तर्हि—तो), एनम्—इसको, वारिधारासहस्रैः—(तुम्हें) सहस्र जलधाराओं से, अलम्—अच्छी तरह, शमयितुम् अर्हसि—शान्त करना चाहिए, हि—क्योंकि, उत्तमानां सम्पदः—बड़े लोगों की सम्पत्तियाँ, आपन्नार्तिप्रशमनफलाः (भवन्ति)—पीड़ितों की पीड़ा को शान्त करने के प्रयोजन वाली होती है।

भावानुवाद :

वायु के चलने पर देवदारु यानी चीड़वृक्ष की शाखाओं की रगड़ से उत्पन्न एवं चिनगारियों से चमरी गायों के बाल-समूह को झुलसा देने वाली दावानल यानी वन की आग यदि उस हिमालय को पीड़ित करे तो उसे तुम्हें सहस्र जलधाराओं से अच्छी तरह शान्त करना चाहिए, क्योंकि बड़े लोगों की सम्पत्तियाँ पीड़ितों की पीड़ा को शान्त करने के प्रयोजन वाली होती हैं।

'यक्षः मेघं दावाग्निं शमयितुं कथयति' इत्यस्य वर्णनं करोति कविः पद्येऽस्मिन्—

वायौ—पवने, सरति (सति)—वाति (सति), सरल-स्कन्धसंघट्टजन्मा—देवदारुद्रुमस्कन्धजन्मा, उल्काक्षपितचमरीबालभारः—स्फुलिङ्गनिर्दग्ध-चमरीकेश-समूहः, दावाग्निः—वनवह्निः, चेत्—यदि, तम्—अमुम्, बाधेत—पीडयेत्, (तर्हि—तदा), एनम्—दावाग्निम्, वारिधारासहस्रैः—जलधारासहस्रैः, अलम्—पर्याप्तम्, शमयितुम्—निर्वापयितुम्, अर्हसि—योग्योऽसि, हि—यतः, उत्तमानाम्—महताम्, सम्पदः—सम्पत्तयः, आपन्नार्तिप्रशमनफलाः—आर्तपीडानिवारणप्रयोजनाः, (भवन्ति—जायन्ते)।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ! पवने वहति सति देवदारुद्रुमस्कन्धसंघर्षणजन्मा स्फुलिङ्गदग्धचमरीकेशसमूहः दवाग्निः यदि तं हिमालयं दहेत् तर्हि त्वं तं पर्वतं जलधाराभिः शमय, यतः सज्जनानां सम्पत्तयः आपद्ग्रस्तपीडानिवारिकाः भवन्ति।

अत्र अर्थान्तरन्यासोऽलङ्कारो वर्तते।

टिप्पणी :

सरलस्कन्धसंघट्टजन्मा—देवदारु वृक्षों के तनों की रगड़ से उत्पन्न होने वाला। सरलानां स्कन्धाः (षष्ठी तत्पुरुष समास), तेषां संघट्टनम् (षष्ठी तत्पुरुष समास), तस्मात् जन्म यस्य, सः (बहुव्रीहि समास)। उल्काक्षपित-चमरीबालभारः—चिनगारियों से जला दिया है चमरी गायों के केश समूह को जिसने। उल्काभिः क्षपिताः (तृतीया तत्पुरुष समास), चमरीणां बालभाराः

(षष्ठी तत्पुरुष समास)। उत्क्षिप्ताः चमरीबालभाराः येन, सः (बहुव्रीहि समास)। शमयितुम्—शान्त करने के लिए। शम् + णिच् + तुमुन् (तुम्)।

ये संरम्भोत्पतनरभसाः स्वाङ्गभङ्गाय तस्मिन्
मुक्ताध्वानं सपदि शरभा लङ्घयेयुर्भवन्तम्।
तान्कुर्वीथास्तुमुलकरकावृष्टिपातावकीर्णान्
के वा न स्युः परिभवपदं निष्फलारम्भयत्नाः ॥५६॥

**अन्वय :**

(मेघ!) तस्मिन् संरम्भोत्पतनरभसाः ये शरभाः मुक्ताध्वनं भवन्तं स्वाङ्गभङ्गाय सपदि लङ्घयेयुः तान् तुमुलकरकावृष्टिपातावकीर्णान् कुर्वीथाः। निष्फलारम्भयत्नाः के वा परिभवपदं न स्युः?

**शब्दार्थ :**

(हे मेघ!), तस्मिन् = उस (हिमालय) में, संरम्भोत्पतनरभसाः = क्रोधपूर्वक वेग से उछलने वाले, ये शरभाः = जो शरभ, मुक्ताध्वनम् = (उनके) मार्ग को छोड़कर चलने वाले, भवन्तम् = आपको (तुमको), स्वाङ्गभङ्गाय = अपने अङ्गों का विनाश करने के लिए, सपदि = सहसा, लङ्घयेयुः = लांघें, तान् = (तो) उन (शरभों) को, तुमुलकरकावृष्टिपातावकीर्णान् कुर्वीथाः = (तुम) जोर की ओलों की वर्षा से तितर-बितर कर देना, निष्फलारम्भयत्नाः—व्यर्थ के कार्यों में प्रयास करने वाले, के = कौन (व्यक्ति), वा = सचमुच, परिभवपदं न स्युः = तिरस्कार के पात्र नहीं बनते?

**भावानुवाद :**

(हे मेघ!) उस हिमालय में क्रोधपूर्वक वेग से उछलने वाले जो शरभ, (उनके) मार्ग को छोड़कर चलने वाले तुमको अपने अङ्गों का विनाश करने के लिए सहसा लांघें, तो उन शरभों को तुम जोर की ओलों की वर्षा से तितर-बितर कर देना। व्यर्थ के कार्य में प्रयास करने वाले कौन व्यक्ति सचमुच तिरस्कार के पात्र नहीं बनते?

**संस्कृत-व्याख्या :**

कविः शरभाणां परिभवस्य वर्णनं करोति पद्येऽस्मिन्—

(मेघ!), तस्मिन् = अमुष्मिन्, हिमालये इत्यर्थः। संरम्भोत्पतनरभसाः = कोपोत्प्लवनवेगाः, ये शरभाः = ये अष्टापदमृगविशेषाः, मुक्ताध्वनम् = परित्यक्तशरभोत्प्लवनमार्गम्, भवन्तम् = त्वाम्, स्वाङ्गभङ्गाय = स्वदेहविना-

शाय, सपदि = सहसा, लङ्घयेयुः = अतिक्रामेयुः, तान् = अमून्, शरभान् इत्यर्थः। तुमुलकरकावृष्टिपातावकीर्णान् = सकुल वर्षोपलवृष्टिपातविक्षिप्तान्, कुर्वीथाः—कुरुष्व। निष्फलारम्भयत्नाः = विफलकर्मप्रयासाः, के वा = प्राणिनः, परिभवपदम् = तिरस्कारभाजनम्, न = नहि, स्युः = भवेयुः।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ! तस्मिन् हिमालये शरभाणाम् उड्डयनमार्गं परित्यजन्तम् अपि त्वां लङ्घयितुं ये शरभा प्रयत्नं कुर्वन्ति। तान् त्वं तुमुलवर्षोपलवर्षेण अङ्गभङ्गयुक्तान् इतस्ततः विक्षिप्तान् च कुरु। जगति निष्फलकर्मोद्यमाः सर्वेऽपि जनाः तिरस्कारपात्रत्वं प्राप्नुवन्ति।"

अत्र अर्थान्तरन्यासोऽलङ्कारो वर्तते।

**टिप्पणी :**

संरम्भोत्पतनरभसाः—क्रोध से वेगपूर्वक उछलने वाले। संरम्भेण उत्पतनम् (तृतीया तत्पुरुष समास)। तस्मिन् रभसः येषाभूते (बहुव्रीहि समास)। शरभाः—आठ टाँगों वाले मृग-विशेष। यह आठ टाँगों वाला सिंहघाती भयङ्कर पशु हिमालय में होता है। मुक्ताध्वानम्—मार्ग छोड़ देने वाले। मुक्तः अध्वा येन, तम् (बहुव्रीहि समास)। परिभवपदम्—तिरस्कार के पात्र। परिभवस्य पदम् (षष्ठी तत्पुरुष समास) परि + भू + अप् (भावे) = परिभवः।

तत्र व्यक्तं दृषदि चरणन्यासमर्धेन्दुमौलेः
शश्वत्सिद्धैरुपचितबलिं भक्तिनम्रः परीयाः।
यस्मिन्दृष्टे करणविगमादूर्ध्वमुद्धूतपापाः
कल्पिष्यन्ते स्थिरगणपदप्राप्तये श्रद्दधानाः ॥५७॥

**अन्वय :**

तत्र भक्तिनम्रः (सन्) दृषदि व्यक्तं सिद्धैः शश्वत् उपचितबलिम् अर्धेन्दुमौलेः चरणन्यासं परीयाः, यस्मिन् दृष्टे उद्धूतपापाः श्रद्दधानाः करणविगमात् ऊर्ध्वं स्थिर गणपदप्राप्तये कल्पिष्यन्ते।

**शब्दार्थ :**

तत्र = वहाँ यानी हिमालय में, भक्तिनम्रः (सन्) = भक्ति से विनम्र होकर, दृषदि = शिला पर, व्यक्तम् = स्पष्ट दिखाई देने वाले, सिद्धैः = (एवं) सिद्धजनों के द्वारा, शाश्वत् = सदा, उपचितबलिम् = पूजित, अर्धेन्दुमौलेः = शिव के, चरणन्यासं परीयाः = चरणचिह्न की प्रदक्षिणा करना, यस्मिन् दृष्टे—जिसके दर्शन करने पर, उद्धूतपापाः—पाप से मुक्त हुए, श्रद्धधानाः

—श्रद्धालु पुरुष, करण-विगमात् ऊर्ध्वम्—शरीर त्यागने के बाद, स्थिरगणपदप्राप्तये-(शिव के) गणों का शाश्वत पद प्राप्त करने में, संकल्पन्ते—समर्थ होते हैं।

**भावानुवाद :**

वहाँ यानी हिमालय में भक्ति से विनम्र होकर शिला पर स्पष्ट दिखाई देने वाले एवं सिद्धजनों के द्वारा सदा पूजित शिव के चरणचिह्न की प्रदक्षिणा करना, जिसके दर्शन करने पर पाप से मुक्त हुए श्रद्धालु पुरुष शरीर त्यागने के बाद शिव के गणों का शाश्वत पद प्राप्त करने में समर्थ होते हैं।

**संस्कृत-व्याख्या :**

'यक्षः मेघं शिवचरणन्यासस्य प्रदक्षिणां कर्तुं प्रोत्साहितं करोति' इत्यस्य वर्णनं कुर्वन् कविः कथयति पद्येऽस्मिन्—

तत्र—हिमालये, भक्तिनम्रः (सन्)—भक्त्यावनतः (सन्), दृषदि—शिलायाम्, व्यक्तम्—प्रकटम्, सिद्धैः—योगिभिः, शश्वत्—सदा, उपचितबलिम्—रचितपूजाविधिम्, अर्धेन्दुमौलेः—चन्द्रशेखरस्य, शिवस्य इत्यर्थः। चरणन्यासम्—पादविन्यासम्, परीयाः—परितः ईयाः, प्रदक्षिणां कुरु इत्यर्थः। यस्मिन्—पादविन्यासे, दृष्टे—अवलोकिते, उद्धूतपापाः—निरस्तकल्मषाः, श्रद्दधानाः—श्रद्धालवः पुरुषाः, करणविगमात्—शरीरत्यागात्, ऊर्ध्वम्—अनन्तरम्, स्थिरगणपदप्राप्तये—शश्वतप्रमथपदाप्तये, कल्पिष्यन्ते—समर्थाः भविष्यन्ति।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ! हिमालस्य एकस्मिन् पाषाणे भगवतः शङ्करस्य चरणन्यासोऽस्ति। योगिनः सदैव तस्य अर्चनां कुर्वन्ति। ये निष्कल्मषाः सन्तः श्रद्धावन्तः पुरुषाः तस्य चरणन्यासस्य भक्तिपूर्वकं प्रदक्षिणां कुर्वन्ति। ते शरीरत्यागानन्तरं शाश्वतं गणपदं प्राप्नुवन्ति। अतः त्वमपि भक्तिपूर्वकं तस्य प्रदक्षिणां कुर्याः।

**टिप्पणी :**

व्यक्तम्—प्रत्यक्ष दिखाई देने वाले। वि+अञ्ज्+क्त। उपचितबलिम्—जिसकी पूजा की गयी है, ऐसे। उपचितः बलिः यस्य, तम् (बहुव्रीहि समास) चरणन्यासम्—पद-चिह्न को। चरणस्य न्यासः, तम् (षष्ठी तत्पुरुष समास)। न्यासः—नि+अस्+घञ् (अ)। भक्तिनम्रः—भक्ति से विनत होकर। भक्त्या नम्रः (तृतीया तत्पुरुष समास)। स्थिरगणप्राप्तये—गणों के शाश्वत स्थान की प्राप्ति के लिए। गणानां पदम् (षष्ठी तत्पुरुष समास), स्थिरं गणपदम् (कर्मधारय समास), तस्य प्राप्तिः, तस्यै (षष्ठी तत्पुरुष समास)।

शब्दायन्ते मधुरमनिलैः कीचकाः पूर्यमाणाः
संरक्ताभिस्त्रिपुरविजयो गीयते किन्नरीभिः ।
निर्ह्रादस्ते मुरज इव चेत्कन्दरेषु ध्वनिः स्यात्
संगीतार्थो ननु पशुपतेस्तत्र भावी समग्रः ॥५८॥

**अन्वय :**

तत्र अनिलैः पूर्यमाणाः कीचकाः मधुरं शब्दायन्ते, संसक्ताभिः किन्नरीभिः त्रिपुरविजयः गीयते, चेत् मुरजे ध्वनिः इव कन्दरेषु ते निर्ह्रादः स्यात् (तर्हि) पशुपतेः समग्रः सङ्गीतार्थः भावी ननु ।

**शब्दार्थ :**

तत्र—वहाँ यानी पद-चिह्न के पास, अनिलैः पूर्यमाणाः —वायु से भरे हुए, कीचकाः—बाँस, मधुरं शब्दायन्ते—मधुर शब्द करते हैं, संसक्ताभिः किन्नरीभिः—किन्नरियाँ संयुक्त होकर, त्रिपुरविजयः गीयते— त्रिपुरविजय का गीत गाती हैं, चेत्—यदि, कन्दरेषु—कन्दराओं में, मुरजे ध्वनिः इव—मृदङ्ग की ध्वनि की तरह, ते—तुम्हारा, निर्ह्रादः स्यात्— शब्द हो, (तर्हि—तो), पशुपतेः—शिव की, समग्रः संगीतार्थः—समस्त संगीत-वस्तुएँ, भावी ननु—निश्चय ही पूर्ण हो जायेंगी ।

**भाषानुवाद :**

वहाँ यानी पद-चिह्न के पास वायु से भरे हुए बाँस मधुर शब्द करते हैं, किन्नरियाँ संयुक्त होकर त्रिपुरविजय का गीत गाती हैं। यदि कन्दराओं में मृदङ्ग की ध्वनि की तरह तुम्हारा शब्द हो तो शिव की समस्त संगीत-वस्तुएँ निश्चय ही पूर्ण हो जायेंगी ।

**संस्कृत-व्याख्या :**

'यक्षः मेघं शिवस्य यशोगाने मन्द्रध्वनिं कर्तुं कथयति' इत्यस्य वर्णनं कविः करोति पद्येऽस्मिन्—

तत्र—चरणन्याससमीपे, अनिलैः—पवनैः, पूर्यमाणाः—क्रियमाणपूर्णाः, कीचकाः—वेणुविशेषाः, मधुरम्—श्रुतिसुखम्, शब्दायन्ते—ध्वनन्ति, शब्दं कुर्वन्ति इत्यर्थः । संसक्ताभिः—संयुक्ताभिः, किन्नरीभिः—किन्नरनारीभिः, त्रिपुरविजयः—त्रिपुरदाहाख्यः, गीयते—गानं क्रियते, चेत्—यदि, मुरजे—मृदङ्गे, ध्वनिः—शब्दः इव—यथा, कन्दरेषु—दरीषु, ते—तव, निर्ह्रादः—निर्घोषः, स्यात्—भवेत् (तर्हि), पशुपतेः—शङ्करस्य, समग्रः—सम्पूर्णः, सङ्गीतार्थः—सङ्गीतवस्तु, भावी—भविष्यति, ननु—निश्चयेन ।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ ! चरणन्यासस्मीपे पवनपूर्णाः कीचकाः श्रुतिसुखं शब्दं कुर्वन्ति । तत्र किन्नर-स्त्रियः त्रिपुरविजयं गायन्ति । यदि दरीषु मृदङ्गध्वनिः इव ते निर्घोषः भविष्यति तदा शङ्करस्य सङ्गीतं पूर्णं भविष्यति खलु ।

अत्र सङ्करालङ्कारो वर्तते ।

**टिप्पणी :**

शब्दायन्ते—शब्द करते हैं। यहां 'शब्दवैरकलहाऽभ्रकण्वमेघेभ्यः करणे' इस सूत्र से क्यङ् प्रत्यय हुआ है। शब्द+क्यङ्+लट्+झ।

निर्ह्रादः—(मेघ का) शब्द। निर्+ह्राद्+घञ् (अ)। भावी—होगी। भू+णिनि।

> प्रालेयाद्रेरुपतटमतिक्रम्य तांस्तान्विशेषान्
> हंसद्वारं भृगुपतियशोवर्त्म यत्क्रौञ्चरन्ध्रम् ।
> तेनोदीचीं दिशमनुसरेस्तिर्यगायामशोभी
> श्यामः पादो बलिनियमनाभ्युद्यतस्येव विष्णोः ॥५९॥

**अन्वय :**

प्रालेयाद्रेः उपतटं तान् तान् विशेषान् अतिक्रम्य भृगुपतियशोवर्त्म हंसद्वारं यत् क्रौञ्चरन्ध्रम् (अस्ति) तेन बलिनियमने अभ्युद्यतस्य विष्णोः श्यामः पादः इव तिर्यगायामशोभी उदीचीं दिशम् अनुसरेः ।

**शब्दार्थ :**

प्रालेयाद्रेः उपतटम्=हिमालय पर्वत के तट-समीप, तान् तान् विशेषान्=उन-उन दर्शनीय वस्तुओं को, अतिक्रम्य=पार कर, भृगुपतियशोवर्त्म=परशुराम का यश-मार्ग, हंसद्वारम्-(एवं) हंसों का द्वार, यत्=जो, क्रौञ्चरन्ध्रम् (अस्ति)=क्रौञ्चरन्ध्र (है) तेन=उससे होकर, बलिनियमने अभ्युद्यतस्य=(तुम) बलि के नियमन में लगे हुए यानी बलि को दबाने में लगे हुए, विष्णोः=विष्णु के यानी वामन के, श्यामः पादः इव—साँवले पैर की तरह, तिर्यगायामशोभी=तिरछे विस्तार की शोभा वाले (बनते हुए), उदीचीं दिशम्=उत्तर दिशा की ओर, अनुसरेः=चले जाना।

**भाषानुवाद :**

हिमालय पर्वत के तट के समीप उन-उन दर्शनीय वस्तुओं को पार कर परशुराम का यश-मार्ग एवं हंसों के द्वारा जो क्रौञ्चरन्ध्र है, उससे होकर तुम

बलि के नियमन में लगे हुए यानी बलि को दबाने में लगे हुए विष्णु के यानी वामन के साँवले पैर की तरह तिरछे विस्तार की शोभावाले बनते हुए उत्तर-दिशा की ओर चले जाना।

**संस्कृत-व्याख्या :**

'यक्षः मेघं क्रौञ्चपर्वतच्छिद्रेण उत्तरां दिशं गन्तुं कथयति' इत्यस्य वर्णनं करोति कविः कालिदासः पद्येऽस्मिन्—

प्रालेयाद्रेः = हिमाचलस्य, उपतटम् = तटसमीपे, तान् तान् = अमून् अमून् प्रसिद्धान् प्रसिद्धान् इति भावः। विशेषान् = दर्शनीयवस्तूनि, अतिक्रम्य = उल्लङ्घ्य भृगुपतियशोवर्त्म = परशुरामकीर्त्तिवर्त्म, हंसद्वारम् = मरालद्वारम्, यत्, क्रौञ्चरन्ध्रम् = क्रौञ्चपर्वतच्छिद्रम् (अस्ति), तेन = अमुना, क्रौञ्चरन्ध्रेण, बलिनियमने = बलिदैत्यबन्धने, अभ्युद्यतस्य = प्रवृत्तस्य, विष्णोः = नारायणस्य, श्यामः = कृष्णः, पादः = चरणः, इव = यथा, तिर्यगायामशोभी = तिरश्चीन-दैर्घ्यशोभी, उदीचीम् = उत्तराम्, दिशम् = काष्ठाम्, अनुसरेः = अनुगच्छ।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—'हे मेघ! हिमाचलस्य तटसमीपे विभिन्नप्रकाराणि द्रष्टव्यवस्तूनि उल्लङ्घ्य त्वं परशुरामस्य कीर्त्तिमार्गभूतं क्रौञ्चरन्ध्रं प्राप्स्यसि। त्वं तेन क्रौञ्चरन्ध्रेण उत्तरां दिशं प्रति गच्छेः। तस्मिन् समये बलिदैत्यबन्धनप्रवृत्तस्य भवगतः विष्णोः श्यामपादस्य शोभा इव ते शोभा भविष्यति।

अत्र संसृष्टिरलङ्कारो वर्तते।

**टिप्पणी :**

उपतटम्—तट के समीप। तटानां समीपे (अव्ययीभाव समास)। भृगुपति-यशोवर्त्म—परशुराम का कीर्त्तिमार्ग। भृगुपतेः यशसः वर्त्म (षष्ठी तत्पुरुष समास)। क्रौञ्चरन्ध्रम्—क्रौञ्चपर्वत का छिद्र। शिवजी से धनुर्वेद सीखते समय कार्त्तिकेय की स्पर्धा में परशुराम ने अपना कौशल दिखाते हुए एक बाण मार कर क्रौञ्चपर्वत को भेद डाला था। यही कारण है कि उस पर्वत में इधर से उधर आने-जाने योग्य छिद्र बन गया। इसी छिद्र (विवर) को क्रौञ्चरन्ध्र कहते हैं। बलिनियमनाभ्युद्यतस्य—बलि के बाँधने में तत्पर या बलि को वश करने में उद्यत। बलेः नियमनम् (षष्ठी तत्पुरुष समास), तस्मिन् अभ्युद्यतः, तस्य (सप्तमी तत्पुरुष समास)। बलि बड़े दानी थे। वे घमण्ड में चूर रहते थे। देवतागण उसके क्रूरकर्म से भयभीत रहते थे। संत्रस्त देवताओं को देखकर भगवान विष्णु ने एक रास्ता ढूंढ निकाला। उन्होंने वामन का रूप धारणकर

उसके पास जाकर तीन पग भूमि माँगी। बलि ने दे दी। वामन भगवान् ने अपने चरण बढ़ाकर आकाश और पृथिवी को दो ही डग में नाप लिया। तीसरे के लिए जगह न मिली तब बलि के सिर पर चरण रखा और उसे पाताल भेज दिया।

गत्वा चोर्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसन्धेः
कैलासस्य त्रिदशवनितादर्पणस्यातिथिः स्याः।
शृङ्गोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः खं
राशीभूतः प्रतिदिनमिव त्र्यम्बकस्याट्टहासः ॥६०॥

**अन्वय :**

ऊर्ध्वं च गत्वा (त्वम्) दशमुखभुजोच्छ्वासित-प्रस्थसन्धेः, त्रिदशवनितादर्पणस्य कैलासस्य अतिथिः स्याः, यः कुमुदविशदैः शृङ्गोच्छ्रायैः खं वितत्य प्रतिदिनं राशीभूतः त्र्यम्बकस्य अट्टहासः इव स्थितः (अस्ति)।

**शब्दार्थ :**

ऊर्ध्वं च गत्वा = और ऊपर जाकर, (त्वम् = तुम), दशमुखभुजोच्छ्वासितप्रस्थसन्धेः = दशमुखभुज—रावण की भुजाओं द्वारा, उच्छ्वासित—हिलायी गयी, प्रस्थसन्धेः—चोटियों के जोड़ों वाले, त्रिदशवनितादर्पणस्य = (एवं) देवताओं की स्त्रियों के दर्पण रूप, कैलासस्य = कैलास पर्वत का, अतिथिः स्याः = अतिथि बनना, यः = जो (कैलासपर्वत), कुमुदविशदैः = कमल-सदृश उज्ज्वल, शृङ्गोच्छ्रायैः = ऊँची चोटियों से, खं वितत्य = आकाश में व्याप्त होकर, प्रतिदिनम् = प्रतिदिन, राशीभूतः त्र्यम्बकस्य = एकत्र हुए शिव के, अट्टहासः इव स्थितः (अस्ति) अट्टहास की तरह स्थित (है)।

**भावानुवाद :**

और ऊपर जाकर तुम रावण की भुजाओं द्वारा हिलायी गयी चोटियों के जोड़ों वाले एवं देवताओं की स्त्रियों के दर्पण रूप कैलास पर्वत का अतिथि बनना, जो कैलास पर्वत कमल-सदृश उज्ज्वल ऊँची चोटियों से आकाश में व्याप्त होकर प्रतिदिन एकत्र हुए शिव के अट्टहास की तरह स्थित है।

**संस्कृत-व्याख्या :**

कविकालिदासः कैलास पर्वतस्यवर्णनं करोति पद्येऽस्मिन्—

ऊर्ध्वं च—उपरि च, गत्वा—व्रजित्वा, (त्वम्), दशमुखभुजोच्छ्वासितप्रस्थसन्धेः—रावणबाहुविश्लेषितसानुसन्धेः, त्रिदशवनितादर्पणस्य—देवप्रमदा-

मुकुरभूतस्य, कैलासस्य—शिवपर्वतस्य, अतिथि:=आगन्तुक:, स्या:—भवे:, य:—कैलास:, कुमुदविशदै:—कैरवनिर्मलै:, शृङ्गोच्छ्रायै:—शिखरोन्नत्यै:, खम्—गगनम् वितत्य—व्याप्य, प्रतिदिनम्—प्रतिदिवसम्, राशीभूत:—पुञ्जीभूत:, त्र्यम्बकस्य—शिवस्य, अट्टहास:—अतिहास:, इव—यथा, स्थित:—अवस्थित (अस्ति)।

कवे: कथनस्य तात्पर्यम् इदमस्ति यत् यक्ष: मेघ कथयति—"हे मेघ! हिमाचलात् उत्तरस्यां दिशि गत्वा त्वं रावणभुजविघटितसानुसन्धे: देवललना-मुकुरभूतस्य कैलासपर्वतस्य अतिथि: भवे:। स: कैलास: कैरवधवलै: शृङ्गोन्नत्यै: गगनं परिव्याप्य शङ्करस्य राशीभूत: अट्टहास: इव अवस्थितोऽस्ति।

अत्र सङ्करालङ्कारो विद्यते।

**टिप्पणी :**

दशमुखभुजोच्छ्वासित प्रस्थसन्धे:—जिसकी चोटियों की सन्धियों यानी जोड़ों को रावण ने अपनी भुजाओं से ढीला कर दिया था, ऐसे। दशमुखानि यस्य स: दशमुख: (बहुव्रीहि समास), तस्य भुजा: (षष्ठी तत्पुरुष समास), तै: उच्छ्वासित: (तृतीया तत्पुरुष समास), तादृश: प्रस्थसन्धि: यस्य तस्य (बहुव्रीहि समास)। त्रिदशवनितादर्पणस्य—देव-ललनाओं के दर्पण। त्रिदशानां वनिता: तासां दर्पणस्य (षष्ठी तत्पुरुष समास)। कुमुदविशदै:—कमल-सदृश धवल। कुमुदानि इव विशदा: कुमुदविशदा:, तै (उपमान कर्मधारय समास)। शृङ्गोच्छ्रायै:—चोटियों की ऊँचाई से। शृङ्गाणाम् उच्छ्राया:, तै: (षष्ठी तत्पुरुष समास)।

उत्पश्यामि त्वयि तटगते स्निग्धभिन्नाञ्जनाभे
सद्य: कृत्तद्विरददशनच्छेदगौरस्य तस्य-
शोभामद्रे: स्तिमितनयनप्रेक्षणीयां भवित्रीं-
मंसन्यस्ते सति हलभृतो मेचके वाससीव ॥६१॥

**अन्वय :**

स्निग्धभिन्नाञ्जनाभे त्वयि तटगते (सति) सद्य: कृत्तद्विरददशनच्छेद-गौरस्य तस्य अद्रे: मेचके वाससि अंसन्यस्ते सति हलभृत: इव स्तिमितनयन-प्रेक्षणीयां भवित्रीं शोभाम् उत्पश्यामि।

**शब्दार्थ :**

स्निग्धभिन्नाञ्जनाभे—चिकने घुटे हुए अञ्जन की तरह चमकने वाले, त्वयि तटगते (सति)—तुम्हारे (कैलास पर्वत) के तट-प्रदेश पर पहुँचने पर,

सद्यः—शीघ्र, कृत्तद्विरददशनच्छेदगौरस्य—कृत्तद्विरददशन—काटे गये हाथी-दाँत के, छेदगौरस्य—टुकड़े की भाँति श्वेत, तस्य अद्रेः—उस पर्वत की मेचके वाससि—श्यामवस्त्र को, अंसन्यस्ते (सति)—कन्धे पर धारण किये हुए, हलभृतः इव—बलराम की तरह, स्तिमितनयनप्रेक्षणीयाम्—निश्चल नयनों से दर्शनीय, शोभां भवित्रीम्—शोभा हो जायेगी, उत्पश्यामि—मैं (ऐसी) संभावना कर रहा हूँ।

**भाषानुवाद :**

चिकने घुटे हुए अञ्जन की तरह चमकने वाले तुम्हारे कैलास पर्वत के तट-प्रदेश पर पहुँचने पर शीघ्र काटे गये हाथी-दाँत के टुकड़े की भाँति श्वेत उस पर्वत की श्यामवस्त्र को कन्धे पर धारण किये हुए बलराम की तरह निश्चल नयनों से दर्शनीय शोभा हो जायेगी, मैं ऐसी संभावना कर रहा हूँ।

**संस्कृत-व्याख्या :**

कैलासस्य वर्त्तमानस्य मेघस्य शोभायाः वर्णनं करोति कविः पद्येऽस्मिन्—

स्निग्धभिन्नाञ्जनाभे—मसृणमर्दितकज्जलकान्तौ, त्वयि—भवति, तटगते (सति)—कैलाससानुगते (सति), सद्यः—सपदि, कृत्तद्विरददशनच्छेदगौरस्य—छिन्नगजदन्तश्वेतस्य, तस्य—अमुष्य, अद्रेः—पर्वतस्य, मेचके—श्यामले, वाससि—वस्त्रे, अंसन्यस्त सति—स्कन्धन्यस्ते सति, हलभृतः—बलरामस्य, इव—यथा, स्तिमितनयनप्रेक्षणीयाम्—निश्चलनेत्रदर्शनीयाम्, भवित्रीम्—भाविनीम्, शोभाम्—कान्तिम्, उत्पश्यामि—संभावयामि।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ! मसृणमर्दितकज्जलवर्णः त्वं यदा सद्यः कृत्तगजदन्तच्छेदधवलस्य कैलासपर्वतस्योपरि यास्यसि तदा तस्य पर्वतस्य शोभा तादृशी एव दर्शनीया भविष्यति यादृशी कृष्णे वस्त्रे स्कन्धे स्थापिते सति बलभद्रस्य शोभा भवति।"

अत्र उपमाऽलङ्कारो वर्तते।

**टिप्पणी :**

स्निग्धभिन्नाञ्जनाभे—चिकने पिसे हुए काजल की तरह कान्ति वाले। स्निग्धं च तत् भिन्नं च (कर्मधारय समास), तादृशम् अञ्जनम् (कर्मधारय समास), तस्य आभा (षष्ठी तत्पुरुष समास), (स्निग्धभिन्नाञ्जनाभा इव आभा यस्य, तस्मिन् (बहुव्रीहि समास)। सद्यः कृत्तद्विरददशनच्छेदगौरस्य—ताजे कटे हाथी-दाँत के टुकड़े की तरह उज्ज्वल। दो रदौ अस्य द्विरदः (बहुव्रीहि समास), द्विरदस्य दशनम् (षष्ठी तत्पुरुष समास), सद्यः कृत्तं द्विरददशनम् (कर्मधारय

समास), तस्य छेदः (षष्ठी तत्पुरुष समास), सः इव गौरः (उपमान कर्मधारय समास)। स्तिमितनयनप्रेक्षणीयाम्—निश्चल नेत्रों द्वारा देखी जाने योग्य। स्तिमिते नयने (कर्मधारय समास), ताभ्यां प्रेक्षणीया, ताम् (तृतीया तत्पुरुष समास)। उत्पश्यामि—संभावना करता हूँ। उद् + दृश + लट् (उत्तम पुरुष एकवचन)।

हित्वा तस्मिन् भुजगवलयं शंभुना दत्तहस्ता
क्रीडाशैले यदि च विचरेत् पादचारेण गौरी।
भङ्गीभक्त्या विरचितवपुः स्तम्भितान्तर्जलौघः
सोपानत्वं कुरु मणितटारोहणायाऽग्रयायी ॥६२॥

**अन्वय :**

(मेघ) तस्मिन् क्रीडाशैले शम्भुना भुजगवलयं हित्वा दत्तहस्ता, गौरी यदि पादचारेण विहरेत् (तर्हि) अग्रयायी स्तम्भितान्तः जलौघः भङ्गीभक्त्या विरचितवपुः मणितटारोहणाय सोपानत्वं कुरु।

**शब्दार्थ :**

(हे मेघ !) तस्मिन् क्रीडाशैले = उस क्रीड़ापर्वत पर यानी उस कैलास पर्वत पर, भुजगवलयं हित्वा = सर्प-रूप कङ्कण को छोड़कर, शम्भुना दत्तहस्ता = शिव के द्वारा हाथ का सहारा दिये जाने पर, गौरी = पार्वती, यदि पादचारेण विचरेत् = यदि पैदल घूमें, (तर्हि = तो,) स्तम्भितान्तः जलौघः = (तुम) अपने जल-प्रवाह को अन्दर ही रोके हुए, अग्रयायी = (उनके) आगे-आगे चलते हुए, भङ्गीभक्त्या = पर्व-रचना से यानी नीचे-ऊंचे खण्ड के क्रम से, विरचितवपुः = शरीर बनाकर, मणितटारोहणाय = मणितट पर चढ़ने के लिए, सोपानत्वं कुरु = सीढ़ी बन जाना।

**भाषानुवाद :**

हे मेघ ! उस क्रीड़ापर्वत पर यानी उस कैलास पर्वत पर सर्प-रूप कङ्कण को छोड़कर शिव द्वारा हाथ का सहारा दिये जाने पर पार्वती यदि पैदल घूमें तो तुम अपने जल-प्रवाह को अन्दर ही रोके हुए, उनके आगे-आगे चलते हुए, पर्व-रचना से यानी नीचे-ऊँचे खण्ड के क्रम से शरीर बनाकर मणितट पर चढ़ने के लिए सीढ़ी बन जाना।

**संस्कृत व्याख्या :**

शिवपार्वत्योः विहारे मेघस्य सहायतायाः वर्णनं करोति कविः पद्येस्मिन्—(हे मेघ !), तस्मिन् = अमुष्मिन्, क्रीडाशैले = केलिपर्वते, शम्भुना =

शङ्करेण, भुजगवलयम् = सर्पकङ्कणम्, हित्वा = परित्यज्य, दत्तहस्ता = वितीर्णकरावलम्बा, गौरी = पार्वती, यदि पादचारेण = यदि चरणसंचारेण, विहरेत् = विचरेत्, (र्तांह = तदा), अग्रयायी = पुरोगतः, स्तम्भितान्तः = प्रतिरुद्धान्तः जलौघः = तोयप्रवाहः, भङ्गीभक्त्या = पर्वरचनया, विरचितवपुः = कल्पितदेहः, मणितटारोहणाय = रत्नस्थलारोहणाय, सोपानत्वम् = सोपानभावम्, कुरु = विधेहि ।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—हे मेघ ! तस्मिन् क्रीड़ापर्वते कैलासे भगवान् शङ्करः स्वभुजङ्गभूषणं परित्यज्य पार्वतीं करे गृहीत्वा विचरति । यदि पार्वती भगवता शङ्करेण साकं चरणाभ्यां संचरेत् र्ताह त्वं तयोः अग्रे गच्छन् जलप्रवाहं प्रतिरुध्य स्वदेहेन पर्वरचनां कृत्वा मणिस्थलारोहणाय तयोः सोपानत्वं कुरु ।

अत्र रूपकालङ्कारो वर्तते ।

**टिप्पणी :**

भुजगवलयम्-सर्प-रूप कंगन को। भुजगः एव वलयः, तम् (कर्मधारय समास) । दत्तहस्ता—दिया है हाथ जिसको यानी दिया है हाथ का सहारा जिसको। दत्तः हस्तः यस्यै सा (बहुव्रीहि समास) । पादचारेण = पैदल । पादाभ्यां चारः, तेन (तृतीया तत्पुरुष समास) । भङ्गीभक्त्या—सीढ़ी के पर्वों की रचना के द्वारा । भक्ति-रचना। भङ्गी—सीढ़ी के पर्व यानी पैर रखने के बने हुए खण्ड । भङ्गीनां भक्तिः, तया (षष्ठी तत्पुरुष समास) ।

तत्रावश्यं वलयकुलिशोद्घट्टनोद्गीर्णतोयं
नेष्यन्ति त्वां सुरयुवतयो यन्त्रधारागृहत्वम् ।
ताभ्यो मोक्षस्तव यदि सखे घर्मलब्धस्य न स्यात्
क्रीडालोलाः श्रवणपरुषैर्गर्जितैर्भाययेस्ताः ॥६३॥

**अन्वय :**

तत्र अवश्यं सुरयुवतयः वलयकुलिशोद्घनोद्गीर्णतोयं त्वां यन्त्रधारागृहत्वं नेष्यन्ति । सखे ! यदि घर्मलब्धस्य तव ताभ्यः मोक्षः न स्यात् (र्ताह) क्रीड़ालोलाः ताः श्रवणपरुषैः र्गाजतैः भाययेः ।

**शब्दार्थ :**

तत्र = वहाँ यानी कैलासपर्वत पर, अवश्यम् = अवश्य ही, सुरयुवतयः = देवताओं की स्त्रियाँ, वलयकुलिशोद्घट्टन = कंगनों की नोकों के प्रहार से, उद्गीर्णतोयम् = जल उगलने वाले, त्वाम् = तुम्हें, यन्त्रधारागृहत्वं नेष्यन्ति =

फव्वारे के रूप में परिणत कर देंगी। सखे = हे मित्र! घर्मलब्धस्य = गरमी में प्राप्त हुए, तव = तुम्हारा, यदि ताभ्यः = यदि उनसे, मोक्षः न स्यात् = छुटकारा न हो, (तर्हि = तो), क्रीडालोलाः = खेल में लगी हुई, ताः = उनको, श्रवणपुरुषैः गर्जितैः = कर्णकठोर गर्जनों से, भाययेः = डरा देना।

भाषानुवाद :

वहाँ यानी कैलासपर्वत पर अवश्य ही देवताओं की स्त्रियाँ कंगनों की नोकों के प्रहार से जल उगलने वाले तुम्हें फव्वारे के रूप में परिणत कर देंगी। हे मित्र! गरमी में प्राप्त हुए तुम्हारा यदि उनसे छुटकारा न हो तो खेल में लगी हुई उनको कर्णकठोर गर्जनों से डरा देना।

संस्कृत-व्याख्या :

'देवललनाः मेघं कङ्कणकोटिप्रहारैः कृत्रिमधारागृहत्वं नेष्यन्ति, इत्यस्य वर्णनं कविः करोति पद्येऽस्मिन्—

तत्र = कैलासपर्वते, अवश्यम् = नूनम्, सुरयुवतयः = देवललनाः वलयकुलिशोद्घट्टनोद्गीर्णतोयम् = कङ्कणाग्रप्रहारोत्सृष्टजलम्, त्वाम् = भवन्तम्, यन्त्रधारागृहत्वम् = कृत्रिमधारागृहत्वम्, नेष्यन्ति = प्रापयिष्यन्ति, सखे = हे सखे!, यदि = चेत् घर्मलब्धस्य = निदाघप्राप्तस्य, तव = भवतः, ताभ्यः = देवललनाभ्यः, मोक्षः = मुक्तिः, न = नहि, स्यात् = भवेत्, (तर्हि = तदा), क्रीडालोलाः = केलिचञ्चलाः ताः = सुरयुवतीः, श्रवणपरुषैः = श्रुतिकटुभिः गर्जितैः = गर्जनैः, भाययेः = त्रासयेः।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ! कैलासे देवललनाः कङ्कणाग्रप्रहारैः उत्सृष्टजलं त्वां यन्त्रधारागृहत्वं नेष्यन्ति। हे मित्र! यदि निदाघलब्धस्य, तव ताभ्यः मोक्षः न भवेत् तर्हि केलिसक्ताः ताः देवललनाः त्वं श्रुतिकटुभिः गर्जितैः त्रासयेः।

टिप्पणी :

वलयकुलिशोद्घट्टनोद्गीर्णतोयम्-कंगनों की नोकों की टक्कर से जल उगलने वाले। वलयानां कुलिशानि (षष्ठी तत्पुरुष समास)। वलयकुलिशैः उद्घट्टनानि (तृतीया तत्पुरुष समास)। उद्गीर्णं तोयं येन सः (बहुव्रीहि समास)। वलयकुलिशैः उद्गीर्णतोयः, तम् (तृतीया तत्पुरुष समास)। क्रीडालोलाः— क्रीड़ा में आसक्त। क्रीडायां लोलाः, ताः (सप्तमी तत्पुरुष समास)।

हेमाम्भोजप्रसवि सलिलं मानसस्याददानः

कुर्वन्कामं क्षणमुखपटप्रीतिमैरावतस्य।

धुन्वन्कल्पद्रुमकिसलयान्यंशुकानीव वातै-

र्नानाचेष्टैर्जलद ललितैर्निर्विशेस्तं नगेन्द्रम् ॥६४॥

**अन्वय :**

जलद ! हेमाम्भोजप्रसवि मानसस्य सलिलम् आददानः ऐरावतस्य क्षणमुखपटप्रीतिं कुर्वन् कल्पद्रुमकिसलयानि अंशुकानि इव वातैः धुन्वन् नानाचेष्टैः ललितैः कामं तं नगेन्द्र निर्विशेः ।

**शब्दार्थ :**

जलद = हे मेघ !, हेमाम्भोजप्रसवि = सुनहले कमलों को उत्पन्न करने वाले, मानसस्य = मानस-सरोवर के, सलिलम् = जल को, आददानः = ग्रहण करते हुए, ऐरावतस्य = ऐरावत हाथी को, क्षणमुखपटप्रीतिं कुर्वन् = क्षणभर के लिए मुख ढंकने के वस्त्र का आनन्द देते हुए, कल्पद्रुमकिसलयानि अंशुकानि इव = (तथा) कल्पवृक्ष के कोमकलपत्तों को वस्त्रों की तरह, वातैः धुन्वन् = हवा से झकझोरते हुए, नानाचेष्टैः—(तुम) अनेक प्रकार की चेष्टाओं वाले, ललितैः = विलासों से, कामम्—इच्छानुसार, तं नगेन्द्रं निर्विशेः = उस पर्वतराज (कैलास) का आनन्द लेना ।

**भाषानुवाद :**

हे मेघ ! सुनहले कमलों को उत्पन्न करने वाले मानस-सरोवर के जल को ग्रहण करते हुए ऐरावत हाथी को, क्षणभर के लिए मुख ढंकने के वस्त्र का आनन्द देते हुए तथा कल्पवृक्ष के कोमल पत्तों को वस्त्रों की तरह हवा से झकझोरते हुए तुम अनेक प्रकार की चेष्टाओं वाले विलासों से इच्छानुसार उस पर्वतराज कैलास का आनन्द लेना ।

**संस्कृत-व्याख्या :**

कैलासपर्वते मेघस्य विभिन्नप्रकाराणां विलासानां वर्णनं करोति कविः पद्येऽस्मिन्—

जलद—हे मेघ !, हेमाम्भोजप्रसवि—सुवर्णकमलोत्पादकम्, मानसस्य—मानससरोवरस्य, सलिलम्—वारि, आददानः—गृह्णन्, ऐरावतस्य—इन्द्रगजस्य, क्षणमुखपटप्रीतिम्—मुहूर्ताननवस्त्रप्रीतिम्, कुर्वन्—कुर्वाणः, कल्पद्रुमकिसलयानि—कल्पतरुपल्लवानि, अंशुकानि सूक्ष्मवस्त्राणि, इव—यथा, वातैः—पवनैः, धुन्वन्—कम्पयन्, नानाचेष्टैः—अनेकचेष्टैः, ललितैः—विलासैः, कामम्—इच्छानुसारम्, तम्—अमुम्, नगेन्द्रम्—पर्वतराजम्, निर्विशेः—उपभुङ्क्ष्व ।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे मेघ ! त्वं सुवर्णकमलहेतुभूतं मानससलिलं पिबन् कञ्चित्कालं यावत् ऐरावतस्य मुखे पटप्रीतिं कुर्वन् अथ च वायुभिः कल्पतरु कोमलदलानि कम्पयन् नानाविधैः विलासैः तं कैलासं समुपभुङ्क्ष्व ।"

अत्र उत्प्रेक्षाऽलङ्कारः अस्ति ।

**टिप्पणी :**

हेमाम्भोजप्रसवि—सुनहले कमलों को उत्पन्न करने वाला। हेमाम्भोजानां प्रसवि (षष्ठी तत्पुरुष समास)। आददानः ग्रहण करता हुआ यानी पीता हुआ। आ+दा+शानच् (आन)। क्षणमुखपटप्रीतिम्—जल-वर्षण के समय सजाने के निमित्त प्रयुक्त मुख ढंकने वाले वस्त्र का आनन्द (देते हुए)। मुखस्य पटः (षष्ठी तत्पुरुष समास), क्षणं मुखपटः (द्वितीया तत्पुरुष समास), क्षणमुखपटस्य प्रीतिः, ताम् (षष्ठी तत्पुरुष समास) धुन्वन्—हिलाते हुए। धु=शतृ (अत्)।

तस्योत्सङ्गे प्रणयिन इव स्रस्तगङ्गादुकूलां
न त्वं दृष्ट्वा न पुनरलकां ज्ञास्यसे कामचारिन्।
या वः काले वहति सलिलोद्गारमुच्चैर्विमाना
मुक्ताजालग्रथितमलकं कामिनीवाभ्रवृन्दम्॥६५॥

**अन्वय :**

कामचारिन्! प्रणयिनः इव उत्सङ्गे (कामिनीम् इव) स्रस्तगङ्गादुकूलाम् अलकां दृष्ट्वा त्वं पुनः न ज्ञास्यसे (इति) न, उच्चैर्विमाना या (अलका) वः काले सलिलोद्गारम् अभ्रवृन्दं (विमाना) कामिनी मुक्ताजालग्रथितम् अलकम् इव वहति।

**शब्दार्थ :**

कामचारिन्—हे इच्छा के अनुसार विचरण करने वाले मेघ!, प्रणयिनः इव—प्रियतम की तरह, तस्य उत्सङ्गे—उस कैलास पर्वत की गोद में, (कामिनीम् इव—स्थित प्रियतमा की भाँति), स्रस्तगङ्गादुकूलाम्—खिसके हुए गङ्गा-रूप वस्त्र वाली, अलकाम्—अलका को, दृष्ट्वा—देखकर, त्वं पुनः—तो तुम, न ज्ञास्यसे इति न—नहीं जानोगे, ऐसी बात नहीं, या—जो अलका, उच्चैर्विमाना—ऊंचे विमानों से युक्त हुई यानी सात मंजिल वाले प्रासादों से युक्त हुई, वः काले—तुम्हारे समय में यानी वर्षा-काल में, सलिलोद्-गारम्—जल बरसने वाले, अभ्रवृन्दम्—मेघ-समूह को, (विमाना) कामिनी मुक्ताजालग्रथितम् अलकम् इव वहति—वैसे ही धारण करती है जैसे (अभिमान न करने वाली) कामिनी मोतियों के समूह से गुंथे हुए बालों को धारण करती है।

**भाषानुवाद :**

हे इच्छा के अनुसार विचरण करने वाले मेघ! प्रियतम की तरह उन कैलास पर्वत की गोद में स्थित प्रियतमा की भांति खिसके हुए गङ्गा-रूप वस्त्र

वाली अलका को देखकर तो तुम नहीं जानोगे, ऐसी बात नहीं। जो अलका ऊँचे विमानों से युक्त हुई यानी सात मंजिल वाले प्रासादों से युक्त हुई तुम्हारे समय में यानी वर्षा-काल में जल बरसने वाले मेघ-समूह को वैसे ही धारण करती है जैसे अभिमान न करने वाली कामिनी मोतियों के समूह से गुँथे हुए बालों को धारण करती है।

**संस्कृत-व्याख्या :**

कविकालिदासः कामिनीमिव अलकां वर्णयति पद्येऽस्मिन्—

कामचारिन्—हे कामचारिन्!, प्रणयिनः— प्रियतमस्य, इव—यथा, उत्सङ्गे—अङ्के, (कामिनीम् इव), स्रस्तगङ्गादुकूलाम्—स्रस्तगङ्गासूक्ष्मवस्त्राम्, अलकाम्—कुबेरनगरीम्, दृष्ट्वा—अवलोक्य, त्वम्—मेघः, पुनः—भूयः, न—नहि, ज्ञास्यसे—परिचेष्यसे, (इति) न—(एतत्) नहि, अपितु ज्ञास्यसे एव इति भावः। उच्चैर्विमाना—उन्नतभवना, या —अलका, वः—युष्माकम्, काले— समये, मेघकाले इत्यर्थः। सलिलोद्गारम्—स्रवज्जलधारम्, अभ्रवृन्दम्—मेघसमूहम्, (विमाना—मानरहिता), कामिनी—स्त्री, मुक्ताजालग्रथितम्—मौलिकसरगुम्फितम्, अलकम् इव—चूर्णकुन्तलम् इव, वहति— बिभर्ति।

कवेः कथनस्य तात्पर्यम् इदमस्ति यत् यक्षः मेघं कथयति—"हे कामचारिन् मेघ! प्रियतमस्य इव कैलासस्य शिखरे स्रस्तगङ्गावस्त्राम् अलकां प्रियतमस्य अङ्के स्रस्तवस्त्रां नायिकाम् इव अवलोक्य त्वं ज्ञास्यसि एव। उन्नतभवना या अलका वर्षाकाले जलवपुंकं मेघसमूहं मानरहिता कामिनी मुक्ताजालग्रथितं चूर्णकुन्तलमिव धारयति।

अत्र सङ्करालङ्कारो विद्यते।

**टिप्पणी :**

स्रस्तगङ्गादुकूलाम्—खिसक गया है गङ्गा-रूपी वस्त्र जिसका। गङ्गा इव दुकूलम् (कर्मधारय समास), तत् स्रस्तं यस्याः, ताम् (बहुव्रीहि समास)। उच्चैर्विमाना—उन्नत प्रासादों वाली। अलकापक्षे—विमान सात मंजिल वाले महलों को कहते हैं। उच्चैः विमानानि यस्यां सा (बहुव्रीहि समास)। कामिनीपक्षे—नष्ट हो चुका है मान जिसका। विगतो मानो यस्याः सा (बहुव्रीहि समास)। मुक्ताजालग्रथितम्—मोतियों की लड़ियों से गुँथे हुए। मुक्तानां जालानि (षष्ठी तत्पुरुष समास), तैः ग्रथितम् (तृतीया तत्पुरुष समास)।

